(9) Vetāla's reason for offering his scissors to the king.

(10) The puzzled goddess Śrī invoking the help of another goddess Bhāratī, who whispers some advice into her ear, and Śrī makes the king's hand free for further action.[65]

(11) The king cuts off his head completely and head-less trunk dances before the goddesses. Then the goddess Bhāratī restores the head again to the body so that the king is resurrected.[66]

(12) The boon of a son is granted by the goddess Bhāratī and not by Śrī, who requests the king to pray to the former.[67]

---

64. ibid. 178 : तद्गृहाण महीभर्त्तः कर्त्तरीं मम निःसहाम् ।
स्वामिद्रोहमसौ दिव्यो न करिष्यत्यसिस्तव ॥१७८॥

65. ibid,212-214 : तदा लक्ष्मीरमन्देऽस्मिन् सन्देहे पतिता सती ।
किंकार्यत्वजडा सद्यो हृदा सस्मार भारतीम् ॥२१२॥
ततस्त्रिभुवनाधीशैर्धाकृते सेविताऽभितः ।
प्रत्यक्षीभूय वाग्देवी किञ्चिद्गुप्तं श्रियेऽदिशत् ॥२१३॥
अथाऽभ्यधत्त भूनाथं श्रीरसौ वीर ! सम्प्रति ।
त्वत्खड्गोऽयं हतस्तम्भो यथाभीष्टं विधीयताम् ॥२१४॥

66. ibid. 215-219 : इत्युक्तिसमकालं स स्वशिरस्तरवारिणा ।
छित्वा गृहाणेदमिदं वदन् क्षिप्त्वार्थिनं प्रति ॥२१५॥
द्रागुत्थायाक्षिविक्षेपभ्रूभङ्गादि मुखे सृजन् ।
श्रियोऽग्रे चारुचारीभिः कबन्धेन मुदाऽनटत् ॥२१६॥
न याति जीवितं यावत्तावल्लक्ष्मीः स्वयं रयात् ।
धरावपस्य मूर्धानं कबन्धस्कन्धगं व्यधात् ॥२१७॥
कमण्डलुजलेनैवममृतप्रतिपन्थिना ।
वाग्देवी तच्छिरोऽसिव्रणं च बभूव तत् ॥२१८॥
शिरश्छेदोच्छलद्रक्तं सङ्गमङ्गमिलापतेः ।
स्वयमक्षालयल्लक्ष्मीर्वाग्विक्षेपस्वयं पयः ॥२१९।

67. ibid. 224-225 : अहं त्रैलोक्यवस्तूनि तेषामेषा तु जीवितम् ।
वाग्देवी जगतां देवी वन्दस्वेमां मुदा नृप ॥२२४॥
अथ भूपोऽनमद् वाणीं वाणी चाशिषमब्रवीत् ।
भविष्यति भवत्सूनुरनूनज्ञानधीरिति ॥२२५॥

(13) A picturesque description of Vajrāyudha resting in his camp before the night-attack.,[68]

(14) The speech by Vajrāyudha which justifies why Vijayavega suddenly remembered the Bālāruṇa ring, in the din of the battle.[69]

(15) Gandharvaka's anxiety to do, rather than an excuse for not doing there and then, a portrait of Harivāhana inspite of his other engagements.[70]

(16) The hymns to the Love-god sung by couples, when Malayasundarī goes to the temple.[71]

68. ibid. 321–325 : अथानङ्गतिथौ नक्तं मुक्तप्राकारविग्रहः ।
गृहप्रहितनिःशेषमित्रमन्त्रिविशारदः ॥३२१॥
एकद्विगायनयुतो द्वित्रिवैहासिकावृतः ।
सुखी त्रिचतुरश्लाघाचतुरः पञ्चशानुगः ॥३२२॥
सुप्तः पार्श्वेण पार्श्वस्थपुष्पप्रकरतारके ।
शशीव शरदम्भोदे तल्पे तारोत्तरच्छदे ॥३२३॥
चन्दनस्यन्ददिग्धाङ्गः पुष्पस्रग्भङ्गभासुरः ।
वसानो वाससी तन्तूकृतेन्दुमहसी इव ॥३२४॥
ऊर्ध्वप्रकोष्ठपाणिस्थमूर्द्धा वज्रायुधस्तदा ।
स्थितोऽनङ्गार्चनाङ्गदरङ्गनादत्तदृग्मुदी ॥३२५॥

69. ibid. 369–371 : अरेरेऽतिप्रशक्तोऽसि पश्य मामेष ते बलम् ।
बालारुण इव ध्वान्तं रंहसा संहराम्यहम् ॥३६९॥
तया बालारुणोक्त्याऽथ सञ्जातस्मरणस्तदा ।
अहं सहर्षः सोत्कर्षरोमहर्षोच्चकञ्चुकः ॥३७१॥

70. ibid. 730 : मया कार्यविशेषेण व्याकुलेनापि संप्रति ।
त्वद्रूपलिखने हेतुः संक्षेपात्कथ्यते श्रुणु ॥७३०॥

71. ibid. 1261–63 : मलयानिलकल्लोललोलशोणध्वजच्छलात् ।
अन्तर्जयज्जनं नूनं यदनादेशकारिणम् ॥१२६१॥
यद्विद्रुमारुणं भेजे रागवन्ति जगन्त्यपि ।
चिकीर्षोरिव पुष्पेषोर्मिलितो दलिकोत्करः ॥१२६२॥
अन्येषां शुसदां वोढुमेकोऽप्याज्ञां प्रगल्भते ।
गरीयसी स्मराज्ञा ते युगलैरेव योह्यते ॥१२६३॥
शक्रचक्रिभिराराध्यं शासनं ते विराध्यताम् ।
काम ! पाखण्डिनां जातं फलं भिक्षाविडम्बना ॥१२६४॥
मर्मांसि यमिनां वज्रकठोराणि सुमेषुभिः ।
अनङ्ग ! भिन्दन्नन्येषां रेपां भिन्त्से भुजाभृताम् ॥१२६५॥
सारं स्मर ! भवद्रूपमिति ते कियती स्तुतिः ।
सारं पश्यन्ति संसारमपि सर्वे त्वयाऽङ्गिनः ॥१२६६॥
स्थानस्थानगतैरेवं युग्मे शृङ्गारहारिभिः ।
स्तूयमानं पूज्यमानं सेव्यमानं च सर्वतः ॥१२६७॥
सखीजनसमानीतपूजोपकरणैः स्मरम् । etc. ॥१२६८॥

(17) Gandharvadatta is referred to as the younger sister of Patralekhā, rather than of Citralekhā.[72]

(18) Both the heroes along with their heroines taking the vows of Jainism, travelling on foot and undertaking difficult penances,[73] at the end.

In some of the poetic imageries the author of the TMKU shows an ability of a higher order than that of Pallīpāla Dhanapāla. As for instance in :

(1) सर्वर्द्धिसुखसंलब्धिसुधाब्धिश्रितयोस्तयोः ।
क्लेशावेशोऽभवत्पुत्रानुत्पत्तिविषबिन्दुना ॥ TMKU. 29.

(2) अथेन्दुशुभ्रे मन्दं सः सौधमूर्ध्नि पदं ददौ ।
अमन्दं तु मुदामोदो हृदये मेदिनीशितुः ॥ TMKU. 47.

(3) इत्युदञ्चितरोमाञ्चमालपन्तं पतिं भुवः ।
सुधोर्मिस्वादवित्कर्णं चकार वचनैर्मुनिः ॥ TMKU. 55.

(4) यथासौ तादृगेवास्ति तर्हि तुष्टेन वेधसा ।
जगत्त्रितयनेत्राणां सूत्रिताऽमृतपारणा ॥ TMKU. 774

But in many other places he has not come up to the level of Pallīpāla Dhanapāla's lucidity and sense of propriety in expression, as in the following comparable instances :

(1) A fine Ārya verse[74]--

गुरुभिरदत्तां वोढुं वाञ्छन्मामक्रमात्त्वमचिरेण ।
स्थातासि पत्रपादपगहने तत्रान्तिकस्थाग्निः ॥

of the TM has been adapted by the author of the TMKU as--

अदत्तां गुरुभिर्वोढुं वाञ्छंस्त्वमचिरेणतः ।
गन्तासि वृक्षगहने तत्र पार्श्वस्थितानलः ॥ TMKU. 479.

where the ommission of the important word 'अक्रमात्' and replacing of 'पत्रपादप' by simple 'वृक्ष' and of 'स्थातासि' by 'गन्तासि' detract much of the beauty of the original. It is significant that the authors of both the

72. ibid. 1445 : तव गन्धर्वदत्तेति स्वसा देवि ! लवीयसि । १४४५ ।
This is addressed by Citralekhā to Patralekhā.

73. ibid. 1989–90, 1992 :
देव्या तिलकमञ्जर्या तथा समरकेतुना ।
समं मलयसुन्दर्या साऽऽददे स व्रतं गुरोः ॥१९८९॥
विजहुस्ते पदन्यासैः प्रकुर्वाणा वसुन्धराम् ।
कमलाया विलासाय स्थलपद्मवतीमिव ॥१९९०॥
दुःकरेणार्जयामासुः सुकृतं चरणेन ते । १९९२ ।

74. cf. TM(N). p. 109 (12 ff.).

TMS and the TMKS respectively have preferred to incorporate such verses without the slightest change.

(2) A beautiful hymn to Jina Ṛṣabha.[75]—

शुष्कशिखरिणि कल्पशाखीव निधिरधनग्राम इव ।
कमलषण्ड इव मारवेऽध्वनि भवभीमारण्य इह वीक्षितोऽसि मुनिनाथ ! कथमपि ॥ etc.

of the original has been marred in the adaptation in the TMKU as-

भरतश्चिन्तामणिः पाणि कल्पद्रुमे गृहाङ्गणम् ।
कामधुग्वेश्मनो मध्यमध्यास्तेऽद्य त्वदीक्षणात् ॥
निःशेषसुखकन्दानाममन्दानां कुकर्मणाम् ।
स्थानं संसारकान्तारमतीतोऽद्य त्वदीक्षणात् ॥ TMKU, 946-47.

which cannot stand comparision with the beautifully lucid, though simple, adaptation by Pallipāla Dhanapāla in his TMS as—

तुष्टावाथ—"जगन्नाथ ! संसारक्षारवारिधौ ।
ऋते त्वद्दर्शनादन्यदमृतप्रदनामृतम् ॥
अस्मादेव यतो देव ! सङ्कल्पितफलप्रदः ।
पुण्यकल्पद्रुमः प्राणिसन्दोहस्य प्ररोहति ॥ TMS. IV. 89-90.

Even this is only tolerable, since it would have been better if both of them had chosen to keep the original intact, as has been done by Lakṣmīdhara !

(3) A fine suggestive Āryā verse—[76]

तव राजहंस ! हंसीदर्शनमुदितस्य विस्मृतो नूनम् ।
सरसिजवनप्रवेशः समयेऽपि विलम्बसे तेन ॥—

has been totally replaced in the TMKU as—

उत्फुल्लाननपद्मायां पद्मिन्यां स्नेहवानपि ।
भानुः सकलकार्याणां समयं न विलङ्घते ॥ TMKU. 990.

—,which not only omits the suggestive reference to the recent attainment of the Vidyādhara kingdom by Harivāhana who has only just come to see Tilakamañjarī, but also spoils the polite, though direct reminder about "getting late," by replacing it with a rather rash, though indirect, reminder about "negligence of proper time'. It is only a slight difference of degree and emphasis, but exhibits a huge difference in poetic approach, when it is remembered that Harivāhana then was not a mere human king, but an emperor (cakravartī) of the whole of the northern range of the Vijayārdha mountain. It is again significant that both Pallipāla Dhanapāla and Lakṣmīdhara have preferred to adopt the original in the body of their respective texts, rather than trying to mishandle, omit or replace it.

As a result of the above changes introduced by the author of the TMKU, and his peculiar approach to the story of the TM, some damage has also been done to the story and characterisation of the original. Thus :

75. ibid. p. 218 (9 ff.)
76. ibid. p. 232 (11 ff.).

(1) The goddess Srī is degraded to a second place in so far as even she stands in need of advice from the goddess Bhāratī at critical moments; and it is the latter who whispers to Śrī the advice—evidently to free the benumbed hand of king Meghavāhana and ask him to do whatever he liked ! Again, after the king has completely severed his head, the goddess Śrī only puts the head on the trunk but she does not have the power to join it. It is the goddess Bhāratī who merely sprinkles water and the king is resurrected[77] !! Clearly it is the predilection of the author of the TMKU, to Bhāratī that has led him to introduce one more goddess Bhāratī and play down the role of Śrī of the original.

(2) The character of Vetāla suffers slightly due to an element of rudeness in his speech, while in the original he is quite courteous.[78]

(3) The character of king Meghavāhana has also suffered to some extent—though the author of the TMKU might have intended to elevate it to the level of a rashly heroic Rājput devotee !—in so far as his satirical dialogue with Vetāla is totally omitted and the king is first martyrized and then resurrected.[79]

(4) The character of queen Madirāvatī is also tampered with, but to no advantage, in so far as she is rather degraded by ascribing to her a speech—as reported by the king to the Vidyādhara Muni—wherin she compares herself unfavourably with a she-boar[80] !

(5) A tastefully mild and catholic religious background of Jainism in the original is covered with an explicitly gaudy and thick coating of the dogmatic aspect of Jainistic colour both at the beginning[81] of the

77. See supra, TMKU. 212-219.

78. cf. supra, TMKU. 165; 178-79 as compared to TM(N) p. 49 (8 ff.) :
राजन् ! किञ्चिदन्यत्त्वदीयमेव चेष्टितम् ।

79. see supra TMKU 167.

80. see supra TMKU 63.

81. cf. TMKU 1-6 : मिथ्यात्वाविरतियोगा दुःकषायाः प्रमत्तयः ।
पञ्चामी भवसाम्राज्यमहामुद्राधिकारिणः ॥१॥
पूर्वापरार्थसंवादं सत्यहेतुं विदन्नपि ।
मिथ्यात्वेन जनः कुर्याद् धर्मे गजनिमीलिकाम् ॥२॥
पुण्यकर्मापि सावद्यं मिथ्यात्वं कारयञ्जनान् ।
निर्ययास्तानपि भवाद्रक्षन्नेव कथं रिपुः ॥३॥
मिथ्यादृक्तपसः शैलतरोरिव गुरोरपि ।
अन्ते दर्शितवैरस्यं स्वल्पमेव भवेत् फलम् ॥४॥
तत्त्वं देवादिमिथ्यादृक् पश्यन्नप्यन्यथेक्षते ।
यथा तैमिरिको दीपं परिवेपविशेषितम् ॥५॥
अन्तुर्मथितमिथ्यात्वः सम्यग्दर्शनभूषणः ।
अचिरान्मुक्तिमाप्नोति हरिवाहनराजवत् ॥६॥

TMKU as well as at the end[82] of this compendium by way of the essence of the religious truths sought to be exemplified in the story of the TM in the opinion of the author of the TMKU.

Moreover the author of the TMKU seems to be more anxious to devote more space to the elaboarte descriptions of Ayodhyā, king Meghavāhana, queen Madirāvati, the Vidyādhara Muni, Vetāla and so on, rather than preserving intact the important points of the story proper. Sometimes he has allowed himself to be careless when he fails to preserve even the correct nomenclature of a place like Maṇipura and of a character like Priyadarśanā.[83] This work is, thus, a good illustration of a dexterous, but presumptous, hand spoiling an original classical piece of art, which in contrast, however, could be successfully epitomised by a lesser, but conscentious and artistic, hand of Pallīpāla Dhanapāla.

### X Conclusion.

It is clear from the above discussion that the present work has been rightly adjudged, by Muni Shri Jianvijayaji,[84] as the best one

82 cf. TMKU 1977; 1882–86; and 1994 :

इयत्कालमनेनाहं धृतः संसारवारके ।
इति द्वेषादिवात्यर्थं स मिथ्यात्वं व्यमूलयत् ॥१९७७॥
यः प्रभावनयान्नृणां हृदि मिथ्यादृशामपि ।
सम्यक्त्वं निजधर्मस्य प्रस्थानकमिव व्यधात् ॥१९८२॥
नृणां संदिग्धधर्माणां धर्मे शाश्वतनिश्चयम् ।
नित्यचैत्येषु नीतानां चक्रे यः परमार्हतः ॥१९८३॥
निशान्तनिर्मलस्वान्तदर्पणप्रतिविम्बितम् ।
विश्वं विश्वं कदाप्येष ददर्श विममर्श च ॥१९८४॥
संसारस्यास्य विश्वासः क्रूरभर्तुरिवास्ति न ।
पातयत्यङ्गिनः काष्ठां योऽध्यारूढान् परानपि ॥१९८५॥
समायाता वयं तीरमित्याश्वास्यापि जन्मिनः ।
व्यावर्त्य पातयत्याशु दुःखावर्त्ते भवोदधिः ॥१९८६॥
मिथ्यादर्शनमूलदुर्गतिचतुःशाखासुखालीफल–
दुःकर्मद्रुमखण्डखण्डनकलादुर्मत्तदन्तावलाः ।
भव्यप्राणिशिवप्रयाणपटहध्वानैर्वचोभिर्जगत्
प्रीणित्वा हरिवाहनप्रभृतयः स्वं श्रेयसं शिश्रियुः ॥१९९४॥

83. cf. TMKU. 8–12; 13–22; 23–28; 37–44; 155–161 etc.; मणिपुर is referred to as मणिमन्दिर-पत्तन in 538; प्रियदर्शना is referred to as सुदर्शना in 546.

84. cf. TMKS. Intro. p. 1 : तिलकमञ्जरीकथासारकर्तृविद्वत्त्रयमुपलभ्यते...दिगम्बरपण्डितश्रीधनपाल-कृतिः श्रेष्ठतमेति मुनिश्रीजिनविजयमतम् । For this opinion of Muni Shri Jinavijayaji cf. JSCH. Vol. XI. Nos. 7–10 p. 517.

amongst the metrical compendiums of the TM, available so far. It is the sheer neglect of the writers on the history of classical Sanskrit literature and their dogmatic adherence to the opinions of the western scholars like Dr. A. B. Keith that the prose-romance of a versatile scholar-poet like Kavi Dhanapāla has been consigned to a remote corner of the so-called "decadent" period.[85] It is a pity to see scholars like Dr. Keith, Dr. De and Dr. Krishnamachariar repeating ad neuseam about the Tilkamañjarī of Kavi Dhanapāla as depicting a love-affair between Samaraketu, the hero and Tilakamañjarī, the heroine, inspite of the fact that over and above the original prose work, two epitomes of both Laksmīdhara and Kr̥shnamācharya (Abhinava-bāṇa) respectively were already published by about A. D. 1919, before the above scholars undertook their works on the history of Sanskrit Literature[86]. It is hoped that this edition of Pallīpāla Dhanapāla's compendium of the TM will induce the students of Sanskrit language and literature to read, and will conduce to a better understanding of the original work of Kavi Dhanapāla.

## XI Acknowledgements

This modest maiden attempt at editing is but a by-product of my research endeavours with regard to the Tilakamañjarī, a prose-romance, by Kavi Dhanapāla who flourished during the latter half of the tenth and the first half of the eleventh century A. D. I have great pleasure to acknowledge the kind help and encouragement afforded to me by all the eminent scholars like Āgama-prabhākara Muni Śrī Puṇyavijayaji, Prof. Dr. A. N. Jani, Prof. R. C. Parikh, Dr. H. C. Bhāyāṇī, Dr. U. P. Shah and others. I am thankful to Srī Gulabchand Zeveri, the Secretary of the Ātmānanda Jaina Jñāna Mandir, Baroda, for kindly offering unstinted co-operation with regard to the use of the manuscripts preserved in the Jñāna Mandir Library. And it is due to the loving interest taken by both Dr. N. J. Shah and Pt. Ambalal P. Shah of the L. D. Institute of Indology, Ahmedabad, that this work has the good luck of seeing the light of the day for the first time.

Ahmedabad.
14-2-1968 N. M. Kansara.
Māgha Paurṇimāsī V. Saṁ. 2024

---

85. cf. CSL. p. 69; HSL(K). p. 331; HCSL. p. 475; HSL (DD). p. 431; SHSL p. 146.
86. Laksmīdhara's TMKS was already published from Patan in Gujarat A. D. 1919 and even before that the epitome by Krishṇamācārya (Abhinava-bāṇa) was also published both in instalments in the Sanskrit Magazine named "Sahr̥daya" as well as in book-from. cf. TMKS. Intro. p. 2 : मद्रासासन्नवर्तिश्रीरङ्गाख्यनगरे वास्तव्यैः श्रीमदभिनवबाणोपाधिधारिभिः कृष्णमाचार्यैः सहृदयाख्ये स्वकीये मासिकपत्रे क्रमशः प्रसिद्धीकृतेयं कथा पृथगपि ग्रन्थाकारेण मुद्रापिता रूप्यकद्वयेन प्राप्यते । As for the works on the history of Sanskrit literature HSL(K) was first published in 1928, HCSL in 1937 and HSL (DD) in 1947.

अथ श्रीपल्लीपालवंशीयधनपालविरचितः

# तिलकमञ्जरीसारः।

## [अथ प्रथमं प्रयाणकम्]

[नमः] श्रीचिदानन्दाय ।

श्रीनाभेयः श्रियं दिश्यात् यस्यांशतटयोर्जटाः ।
भेजुर्मुखाम्बुजोपान्तभ्रान्तभृङ्गावलिभ्रमम् ॥१॥
जडोऽपि यत्प्रभावेन भवेन्मान्यो मनीषिणाम् ।
सदा सेव्यपदा मह्यं सा प्रसीदतु भारती ॥२॥
नमः श्रीधनपालाय येन विज्ञानगुम्फिता ।
कं नालङ्कुरुते कर्णस्थिता तिलकमञ्जरी ॥३॥
तस्या रहस्यमादाय मधुव्रत इवादरात् ।
मन्दवागपि संक्षेपादुद्गिरामि किमप्यहम् ॥४॥
कथागुम्फः स एवात्र प्रायेणार्थास्त एव हि ।
किञ्चिन्नवीनमप्यस्ति रसौचित्येन वर्णनम् ॥५॥
तत्कथासङ्ग्रहेऽमुत्र बन्धमात्रविशेषतः ।
सन्तः सन्तोषमायान्तु यतः प्रकृतिवत्सलाः ॥६॥
अस्त्ययोध्यापुरी रम्या या शौर्याकृष्टचेतसा ।
ईक्ष्वाकूणां महेन्द्रेण वितीर्णेवामरावती ॥७॥
आसीदतिबलस्तस्यां राजा श्रीमेघवाहनः ।
यत्प्रतापप्रदीपान्तः शत्रुभिः शलभायितम् ॥८॥
देवी तन्मानसोन्मादमदिरा मदिरावती ।
मग्ना यदङ्गलावण्ये[1] रतिरूपकथाप्रथा ॥९॥
तयोः सुकृतसम्पन्नविश्ववाञ्छितयोरपि ।
अपत्यानाप्तिरेकैव दुनोति स्म मनोऽनिशम् ॥१०॥
अन्यदा भद्रशालस्य चन्द्रशालमधिस्थितौ ।
द्योतयन्त दिशं याम्यां महसा सहसाऽम्बरात् ॥११॥

---

१ ण्य ।

आयान्तमुल्लसद्यज्ञोपवीतं वल्कलावृतम् ।
अपश्यतां जटाजूटधरं तौ खेचरं मुनिम् ॥१२॥ युग्मम् ।
अर्घादिक्रिययाऽऽकृष्टचेतास्तत्रावतीर्य सः ।
राज्ञा न्यस्ते स्वहस्तेन निविष्टो हेमविष्टरे ॥१३॥
सपर्यामुचितां कृत्वा नत्वा प्रोवाच भूपतिः ।
भगवन्नद्य धन्योऽहं यद् गृहानागमद् भवान् ॥१४॥
तदादिश किमाधेयं राज्यं कोशो बलं मम ।
त्वदायत्तमिदं येन कार्यं तदनुगृह्यताम् ॥१५॥
निःस्पृहोऽथ महर्षिस्तं व्याजहार महीपते ! ।
राज्येन[1] त्यक्तसंगस्य[2] सप्ताङ्गेनापि किं मम ॥१६॥
शंस तावत् किमाख्याऽसौ कमनीयतमा पुरी ।
को वाऽमुष्यां[3] महाभागः कश्च वंशस्त्वयोदितः ॥१७॥
सर्वलक्षणसम्पूर्णा का चेयं पुण्यभागिनी ।
किमर्थं च भवानन्तःसंतप्त इव दृश्यते ॥१८॥
सकज्जलकराम्भोजव्यञ्जिताश्रुप्रमार्जना ।
इयं च लक्ष्यते सद्यो रोदनाद् विरतेव किम् ? ॥१९॥
भूपोऽभ्यधादयोध्याऽसौ पूरहं मेघवाहनः ।
शासिता कियतोऽप्यस्य भारतस्य रघूद्वहः ॥२०॥
इयं च प्रेमपात्रं मे कलत्रं मदिरावती ।
मुक्त्वाऽनपत्यतामेकां न किञ्चित् खेदकारणम् ॥२१॥
अद्य प्रातरपत्यार्थमुपायांश्चिन्तयन्नहम् ।
श्लोकमीदृशमश्रौषं बन्दिना समुदीरितम् ॥२२॥
'क्षपा[4] विपदिव क्षीणा नृपाराधय देवताः ।
भवत्कुलमिवोदेति चण्डदीधितिमण्डलम्' ॥२३॥
अथाचिन्तयमस्यैव सारस्वतमिदं वचः ।
स्वीकृत्याराधयिष्यामि वने कामपि देवताम् ॥२४॥
निश्चित्येत्थमथोत्थाय प्रातःकृत्यं विधाय च ।
प्रासादाग्रस्थितामेत्य देवीमेतामवादिषम् ॥२५॥

---
१ म । २ स्ये । ३ ष्यां । ४ क्षि ।

मयाऽपत्यार्थमाधेयं देवताराधनं वने ।
आप्रसादात् ततः स्थेयं त्वया गुरुजनान्तिके ॥२६॥
सहैवैष्यामि नाथाहमित्युक्तेऽसौ निवारिता ।
साञ्जनाश्रुभिरास्येन्दुं कलङ्कयति केवलम् ॥२७॥
तस्माद् बोधयितुं पूज्य ! युज्यते भवतोऽप्यसौ ।
इत्याख्याते क्षणं ध्यात्वा पुनः स मुनिरभ्यधात् ॥२८॥
राजन् ! वनभवैः क्लेशैरलं स्वकुलदेवताम् ।
निजोपवन एव त्वं राजलक्ष्मीं प्रसादय ॥२९॥
गृहाणेमां च कल्पद्रुकल्पां विद्याधरार्चिताम् ।
दुर्लभामल्पभाग्यानां त्वं विद्यामपराजिताम् ॥३०॥
नियम्येन्द्रियशाखासु प्लवमानं मनःकपिम् ।
जप त्रिसन्ध्यमप्येतां कृतश्रीदेवतार्चनः ॥३१॥
वीक्ष्य पार्श्वाण्यथो रक्षां कृत्वा स्वस्य नृपस्य च ।
विद्यां न्यवेदयत् कर्णे नीचैरुच्चरिताक्षरम् ॥३२॥
आज्ञापयदथो राज्ञीमाप्रसादात् त्वयाऽपि च ।
दूरस्थयैव कार्याऽस्य भक्तिर्भर्तृजनोचिता ॥३३॥
राजन्नहमिहायातः पुष्करद्वीपतोऽधुना ।
जम्बूद्वीपस्थतीर्थेषु प्रयातव्यं मया पुनः ॥३४॥
अनुजानीहि मामेवमुक्त्वा विद्यां स खेचरीम् ।
जपन् सौधाज्जगाम द्यां तडित्वानिव नीरधेः ॥३५॥
राजाऽपि तद्वियोगार्त्तः क्षणं स्थित्वाऽवतीर्य च ।
सानन्दो मुनिवृत्तान्तं प्रधानेभ्यस्तमभ्यधात् ॥३६॥
अथोपवन एवायं देवायतनमद्भुतम् ।
उन्मणिस्तम्भमुत्तुङ्गप्रकाराग्रमकारयत् ॥३७॥
मुक्तामयं श्रियो बिम्बं प्रतिष्ठाप्य तदन्तरे ।
कृतस्नानः शुचिक्षौमो विधिनाऽऽराधयन्नृपः ॥३८॥
अभ्यर्च्य श्रियमन्येद्युः प्रदोषेऽसिलतासखः ।
असौ शक्रावताराख्यं जगाम जिनमन्दिरम् ॥३९॥

---

१ त ।

अयोध्यया सह न्यस्तं शक्रेणादिजिनाधिपम् ।
नत्वाऽभिमुखमायान्तं तेजःपुञ्जमिवाङ्गिनम् ॥४०॥
म्लायन्माल्यादिभिश्चिह्नैरुन्नीतच्यवनक्षणम् ।
तारहाराद्यलंकारप्रभापूरितमण्डपम् ॥४१॥
प्राविशन्नेव तद्द्वारि देवमेवं व्यलोकय सः ।
सविस्मयोऽमुचत् खड्गं प्रभुत्वाहंकृतिं तथा ॥४२॥
अथोपसृत्य चक्रे च स्वागतं रचिताञ्जलिः ।
सोऽपि तं वीक्ष्य सर्वाङ्गं निरुद्धगतिरभ्यधात् ॥४३॥
राजन् ! स त्वं कृतश्लाघो मघोना मेघवाहनः ।
आख्यातः समयाख्यानदक्षिणैरिव लक्षणैः ॥४४॥
मामप्यवेहि धर्मात्मन् ! सौधर्मस्वर्गवासिनम् ।
ज्वलनप्रभनामानमिन्द्रसामानिकं सुरम् ॥४५॥
सम्प्रति स्वर्गतः सोऽहं प्रस्थितः पथि च व्रजन् ।
वीक्ष्य तीर्थमिदं नन्तुमन्तरिक्षादवातरम् ॥४६॥
निवारितभवापातं जातं देवस्य दर्शनम् ।
फलितं च तवाकाण्डदर्शनेन महीपते ! ॥४७॥
गन्ताऽस्मि त्रिजगद्द्वीपे [द्वीपे] नन्दीश्वराभिधे ।
सुरस्तत्रास्ति मे मित्रं सुमालीति महर्द्धिकः ॥४८॥
स्वयंप्रभाऽऽख्यया देव्या जिनायतनसम्पदम् ।
द्रष्टुं त्रिविष्टपान्नीतः प्रीतश्च रमतेऽनया ॥४९॥
तस्मिन् रतिविशालाऽस्य नगरी च गरीयसी ।
साऽद्य मेऽनुचरैर्दृष्टा विचरद्भिरितस्ततः ॥५०॥
तत्र सत्यप्यनाथेव निर्जनेवै गतोत्सवा ।
ऐक्षि मन्दिरमप्यस्य म्लानवन्दनमालिकम् ॥५१॥
तदिदं सकलत्रस्य तस्य च्यवनसूचकम् ।
विपर्यासाः पदार्थानामन्यथा न भवन्त्यमी ॥५२॥
तद् गत्वा बोधयिष्येऽमुं संसारासारतां वदन् ।
नीत्वा च रजनीमेतां निवर्त्तिष्ये दिवं प्रति ॥५३॥

१ ष्ठ । २ नेनव ।

कालोचितं[1] करिष्ये च धर्मानुष्ठानमञ्जसा ।
यतो मे स्वल्पमेवायुः स्तोका च त्रिदिवस्थितिः ॥५४॥
समये कथमप्यासदर्शनस्य तवाधुना ।
मन्मानसं प्रियं[2] कर्तुं किञ्चिदुत्सहतेतराम् ॥५५॥
प्रियं प्रियङ्गुमञ्जर्याः कण्ठाश्लेषेषु मामिव ।
एतं चन्द्रातपं हारं गृहाणानुगृहाण माम् ॥५६॥
अयं हि मथनस्यान्ते श्रयन्त्यै हरिमन्दिरम् ।
दुहित्रे वार्द्धिना[3] दत्तस्तया कण्ठे धृतश्चिरम् ॥५७॥
जयन्तजन्मनि प्रत्त[4]स्तया शच्यै[5] तयाऽन्यदा ।
सख्युः प्रियङ्गुसुन्दर्या मत्प्रियायाः समर्पितः ॥५८॥
कर्मण्यादिश्य धर्म्ये तां स्वर्गान्निर्ग[च्छ]ताऽधुना ।
आप्तो मया ततः कण्ठादुत्कण्ठाधि[6]विनोदनम् ॥५९॥
महाभागेन[7] मान्याऽसौ प्रथमप्रार्थना मम ।
यतोऽयमगृहीतोऽपि भवता गत एव मे ॥६०॥
अल्पशेषायुपस्त्वेष मम तस्याश्च जातुचित् ।
प्रथये[द्] दृक्पथातिथ्यं भवन्मैत्रीपवित्रितः ॥६१॥
आवयोर्भवताऽप्येवं भवत्युपकृतं महत् ।
तन्निर्विचारग्राह्योऽयमस्मानुपचिकीर्षता[10] ॥६२॥
इत्थं समर्प्य तं हारं मित्रागारं जगाम सः ।
नृपश्चाभ्यर्च्य नाभेयमिन्दिरामन्दिरं गतः ॥६३॥
श्रियः सायंतनीं[11] पूजां कृत्वा स्तोतुं प्रचक्रमे ।
तव सेवाऽनु[12]भावोऽयं देवि ! यन्मादृशामपि ॥६४॥
नैसर्गिकस्वरूपेण स्वर्गिणो यान्ति दृक्पथम् ।
एतच्च भूषणं[13] तेन दत्तं मम महात्मना ॥६५॥
तथाऽप्येतत् तवैवेति न मम स्पर्शमर्हति ।
इत्युक्त्वा मुक्तवान् हारं देवीपादाब्जयोः पुरः ॥६६॥ कुलकम् ।
अत्रान्तरे नभोरन्ध्रं प्रतिध्वानेन पूरयन्[14] ।
उल्ललास स्फुटं हासध्वनिः कर्णज्वरावहः ॥६७॥

१ त । २ या । ३ मा । ४ प्रमत्त । ५ साच्ये । ६ वि । ७ ग्ये । ८ ई । ९ स्या ।
१० र्व । ११ शा । १२ मु । १३ स । १४ त् ।

विस्मयेनाथ भूनाथश्चक्षुस्तमनु [1]व्यक्षिपत् ।
वामतो देवताऽऽसन्नं सहसा दत्तदर्शनम् ॥६८॥

अत्युच्चकृशकृष्णाङ्गं पादनद्धास्थिनूपुरम् ।
तालदीर्घचलज्जङ्घं क्षीणमांसोरुमण्डलम्[2] ॥६९॥

नागतालद्दढानद्धशार्दूलाजिनवाससम् ।
करालोदरपातालं लक्षपार्श्वकवक्षसम् ॥७०॥

वामे कपालं[3] बिभ्राणं कर्त्तिकामपरे करे ।
जिह्वास्पृष्टोष्ठ[4]पर्यन्तं दंष्ट्राक्रकचदारुणम् ॥७१॥

घोरनासा[5]पुटं रक्तनेत्रं[6] पिङ्गलमूर्द्धजम् ।
आजानुविलसन्मुण्डमालं वेतालमैक्षत ॥७२॥

तं चादृष्टचरं दृष्ट्वा सधैर्यमवदन्नृपः ।
किं हस्यते महासत्त्व ! वदैतदसमञ्जसम् ॥७३॥

सोऽप्याख्यन्न किमप्यन्यत् त[7]वैवाराधनाविधिः ।
मामतिक्रम्य यद् देवीं प्रसादयितुमिच्छसि ॥७४॥

अहं हि सततासेवी देव्याः परिजनाग्रणीः ।
मयि तृप्तीकृते मुग्ध ! सिध्यतीह समीहितम् ॥७५॥

वदति[8] स्म नृपः स्मित्वा युक्तमाह भवानिदम् ।
तवैवायं प्रमादो यन्न ममादौ निवेदितम् ॥७६॥

अपर्याप्तेऽधुना कल्पे विवक्षितफलार्थिना ।
नार्चनीयो मया कश्चिदिति मे व्रतनिश्चयः ॥७७॥

क्षामकुक्षे बुभुक्षा चेत् तदेतं देवताबलिम् ।
कोणे स्थित्वा हरेत्युक्तो वेतालः पुनरालपत् ॥७८॥

आस्तामयं वयं येन मांसाहाराः क्षि[10]पाचराः ।
त्वया हि तावदुद्दामसंग्रामा बहवः कृताः ॥७९॥

हताश्च भूभृतो नैके[11] तदेकं पू[9]र्णलक्षणम् ।
कपाल[12]कर्परं ताततर्पणाय ममार्पय ॥८०॥

१ वि। २ ल। ३ ल। ४ ष्ट। ५ शा। ६ वं। ७ तत। ८ य। ९ दे। १० क्षि। ११ ने। १२ प।

राजाऽप्यूचे कपालानां न कृतः संग्रहो मया ।
जातु युष्मादृशामेभिः कार्यं भावीत्यजानता ॥८१॥
अन्यदन्वेषयाम्यल्पविलम्बं सहसे यदि ।
नो चेन्मदीयमेवेदमङ्गीकुरु शिरोऽम्बुजम् ॥८२॥
निर्वर्ण्य परं सन्ति लक्षणानीह कानिचित् ।
वेतालोऽथ तदालोक्य साधु साध्विदमभ्यधात् ॥८३॥
नृत्यन्नथ कपालस्य कर्णवर्त्तीं स्वकर्त्तिकाम् ।
घृष्ट्वोपनिन्ये भूपाय सोऽप्युवाच निशाचरम् ॥८४॥
आस्तामिदं हि दिव्यास्त्रं निस्त्रिंशोऽपि तवेप्सितम् ।
कर्त्तेत्युक्त्वा सहर्षस्तमाचकर्ष कुशास्तरात् ॥८५॥
देवीं प्रणम्य वामाग्रहस्तग्रस्तोर्ध्वमूर्द्धजः ।
खड्गं व्यापारयामास कण्ठे दक्षिणपाणिना ॥८६॥
अर्द्धकृत्ते च कण्ठेऽस्य सहसैव महीभुजः ।
अभवच्चित्रविन्यस्त इवाकिञ्चित्करः करः ॥८७॥
यावत् साहसिकश्छेत्तुं यतते वामपाणिना ।
तावन्मूर्च्छाश्लथीभूतसर्वाङ्गस्तरसाऽपतत् ॥८८॥
लब्धसंज्ञः सुरस्त्रीणामथ हाहारवं नृपः ।
शुश्राव मन्दरक्षुब्धक्षीरोदध्वनिसोदरम् ॥८९॥
ततश्चतुर्भिर्बिभ्राणां पाणिभिः कङ्कणावलिम् ।
उल्लासयन्तीं कल्लोलांश्चलद्धवलचामरैः ॥९०॥
फेनं वहन्तीं सर्वाङ्गलग्नमुक्ताविभूषणैः ।
सूर्यान्द्रमसौ रत्नकुण्डलाभ्यां वितन्वतीम् ॥९१॥
रम्भादिभिः सहाम्भोधेः सम्प्रतीव विनिर्गताम् ।
क्षिप्तचक्षुश्च सोऽपश्यत् कमलां कमलासनाम् ॥९२॥
ततो दन्तप्रभाशुभ्रैः करस्थकलसामृतैः ।
स्नपयन्ती नृपस्याङ्गं व्याजहार हरिप्रिया ॥९३॥
तुष्टाऽस्मि साहसेनाद्यमालपन्त्यामिति श्रियम् ।
भूपोऽभाषिष्ट तुष्टा चेच्छेत्तुमीशं करं कुरु ॥९४॥

१ स्तुं। २ त्यस्का। ३ च्छे। ४ ग। ५ स्ना। ६ तध। ७ फ। ८ न्ती। ९ या।

पुनः श्रीः स्माह मत्पार्श्वे सौम्य! एव निषेवते ।
नासौ निशाचरः किन्तु द्वाःस्थो मम महोदरः ॥९५॥
एषा विभीषिकाऽनेन कृता सत्त्वं तवेक्षितुम् ।
मुक्त्वा कदाग्रहं तेन प्रार्थय स्वार्थमीप्सितम् ॥९६॥
सोऽपि नत्वाऽवदद् देवि! वंश्यानां मामपश्चिमम् ।
कुरु वीरप्रसूनां च प्रथमां मदिरावतीम् ॥९७॥
सप्रसादाऽवदत् पद्मा नचिरात् ते भविष्यति ।
आर्त्तत्राणपरः कीर्त्तिपवित्रितजगत्त्रयः ॥९८॥
भूपालमौलिमाणिक्यशोणितांह्रिनखावलिः ।
निखातविजयस्तम्भश्चतुरम्भोधिसीमनि ॥९९॥
विजितारिवधूधौतशुद्धान्तस्त्रीपदाम्बुजः ।
भोक्ता निखिलभूपाल-खेचराधिपराज्ययोः ॥१००॥
उद्धूतचामरः [४]क्लृप्तदेहद्वितयया मया ।
कलाकलापनिष्णातः प्रतापवसतिः सुतः ॥१०१॥ कलापकम् ।
चन्द्रातपोऽयं हारश्च सर्वविघ्नापहारकः ।
मया दत्तस्तवाऽर्घोऽसौ स्वाङ्गजस्यैव यौवने ॥१०२॥
विधेयः सविधे चास्य दुर्गारण्यरणादिषु ।
अनुजानीहि गन्ताऽस्मि स्वपद्महृदसद्मनि ॥१०३॥
इत्युक्त्वा ख्यातमाहात्म्यं निजं बालारुणाभिधम् ।
रत्नाङ्गुलीयकं चास्मै दत्त्वा देवी तिरोदधे ॥१०४॥
कोणैकदेशेऽनुचरैः पूर्वमेव प्रकल्पितम् ।
सविस्मयः क्षणं स्थित्वा कुशतल्पमगान्नृपः ॥१०५॥
तत्रात्मानं करगतजगद्वैभवं मन्यमानो
हारन्यासे त्रिदशगदितान्यूहमानो मृदूनि ।
तोपालापान्मुदितकमलान् कोमलान् गाहमानः
सानन्दस्तां रजनिमनयत् कोशलक्षोणिपालः ॥१०६॥

इति [ श्रीतिलकमञ्जरीसारे ] लक्ष्मीप्रसादनो नाम प्रथमो विश्रामः
(इति प्रथमं प्रयाणकम् )।

---

१ म-। २ माएण। ३ धू। ४ क्ल।

## अथ द्वितीयं प्रयाणकम् ।

प्रातर्विधिं विधायाथ वेदिकायामुपाविशत् ।
तं च प्राणेमुरागत्य पौराः स्मितमुखाम्बुजम् ॥१॥
आकारोन्नीततत्त्वैस्तैरनुयुक्तः स उक्तवान् ।
वृत्तान्तं श्रीप्रसादान्तं प्रारभ्यामरदर्शनात् ॥२॥
अदर्शयच्च तेषां ते दिव्यहाराङ्गुलीयके ।
सर्वेऽप्यथ तमुर्वीशं प्रशशंसुः सविस्मयाः ॥३॥
रत्नाध्यक्षमथ क्ष्माभृज्जगादायं महोदधे! ।
हारश्चन्द्रातपः पूज्यो दिव्यरत्नान्तिके त्वया ॥४॥
अङ्गुलीयकमेतत् तु वज्रायुधचमूपतेः ।
प्रस्थापय प्रयातस्य जेतुं कर्णाटभूपतीन् ॥५॥
वाच्यो विजयवेगाख्यस्तत्प्रधानो यथा त्वया ।
निशायुद्धेषु सेनान्यः सन्निधेयमिदं सदा ॥६॥
आदिश्यैवमथोत्थाय राजलोकपरिष्कृतः ।
स्तुतार्थं सर्वराज्ञीभिरारब्धविविधव्रतम् ॥७॥
नृपतिज्ञातिलोकेनार्च्यमानकुलदेवतम् ।
ससंभ्रमं वयस्याभिः पृच्छ्यमानद्विजव्रजम् ॥८॥
पुरोधसाऽभितः कीर्यमाणशान्तिपयःकणम् ।
प्रगुणीकृतमाङ्गल्यं स ययौ राजमन्दिरम् ॥९॥
कृतस्नानस्य तत्रास्य वस्त्रालङ्कारधारिणः ।
विदधे वारनारीभिरवतारणमङ्गलम् ॥१०॥
राजलोकं विसृज्याथ वन्दिघोषैः सहोत्थितः ।
अध्यारुह्य वशां विश्वसामन्तपरिवारितः ॥११॥
स्थानस्थानात्तमाङ्गल्यः पुरं पश्यन् ध्वजोद्धुरम् ।
शनैः शक्रावताराख्यं जगाम जिनमन्दिरम् ॥१२॥ युग्मम् ।
तत्रादिजिनमभ्यर्च्य गत्वा चैत्येषु सर्वतः ।
स्त्रीनेत्रैः पीयमानास्यलावण्यः सौधमासदत् ॥१३॥

---

१ स्कृ । २ म ।

मुक्त्वा विशेषनेपथ्यमेष प्रक्षालितक्रमः ।
भुञ्जानकजनाकीर्णं ययौ भोजनमण्डपम् ॥१४॥
तत्राहारं विचित्रान्नप्रकारमकरोदथ ।
उपस्पृश्यात्तताम्बूलः सौधाग्रवलभीमगात् ॥१५॥
अध्यास्य रत्नपर्यङ्कं तत्र नेत्रोत्तरच्छदम् ।
वीणादिकविनोदेन दिनशेषं निनाय सः ॥१६॥
कृत्वा देवार्चनं सूर्यबिम्बेऽस्ताचलचुम्बिनि ।
कल्पितोदारशृङ्गारः प्रायादास्थानमण्डपे ॥१७।
वीक्षणाभाषणप्रीतं राजलोकं विसृज्य च ।
द्वाःस्थादिष्टपथः क्ष्मापः प्रापदन्तःपुरान्तरम् ॥१८॥
ज्योत्स्नाविशदनेपथ्यां व्रतकर्शितविग्रहाम् ।
शशिलेखामिवापश्यत् तत्रासौ मदिरावतीम् ॥१९॥
पिबन्तीं स्मितनेत्राभ्यामभ्युत्थानविधायिनीम् ।
वामदेशे निविश्यैतां निविष्टो हेमविष्टरे ॥२०॥
कृत्वाऽवतारणं तत्र वारस्त्रीषु गतास्वथ ।
भुक्त्वालङ्कारताम्बूलं पात्रं याते सखीजने ॥२१॥
स्वभावसुभगामङ्गगुणैर्मधुरिमादिभिः ।
सालङ्कारां चकारेमां स विद्वानिव भारतीम् ॥२२॥
तत्क्षणोद्भूतकन्दर्पविकारोऽतिमनोहरम् ।
पीडितस्तनमाश्लिष्य शयनीये निनाय ताम् ॥२३॥
जगादेति च किं देवि ! मद्व्रतैर्न तव व्रतम् ।
यद्दशामीदृशीं नीतमङ्गं कुसुमकोमलम् ॥२४॥
देव ! पद्माप्रसादेन सर्वं सफलमावयोः* ।
तयोः संलपतोरेवं सुखनिद्रा समागमत् ॥२५॥
निशान्तसमये देव्याः स्तन्यमैरावतः पिबन् ।
स्वप्नेऽम्बिकाया हेरम्ब इवादृश्यत भूभृता ।२६॥
प्रबुद्धो बन्दिनां ध्वानैरानन्द्य स्वप्नशंसनात् ।
देवीं प्रागुत्थितां राजा निर्ययौ वासवेश्मनः ॥२७॥

१ द । २ क । ३ यां ।

* In the T M the king speaks this and not the queen.

अथासन्नऋतुस्नाना गर्भं भूपस्य वल्लभा ।
बभार भास्वरं तेजः शरद्भानोस्तनूरिव ॥२८॥
क्रमेणोपचिते गर्भे प्रीतिं साऽधत्त सङ्गरे ।
कुलाद्रिक्रीडने दाने तथा दिव्यकथाश्रुतौ ॥२९॥
अथ पुण्यदिने दीपाञ्जयन्तं निजतेजसा ।
जयन्तमिव पौलोमी सा तनूजमजीजनत् ॥३०॥
कृत्वा दारिद्र्यविच्छेदं पुत्रजन्मनिवेदिनाम् ।
प्रापाथ सज्जमङ्गल्यं भूपतिः सूतिकागृहम् ॥३१॥
तत्र छत्राब्जचक्रादिचिह्नसूचितसम्पदम् ।
दृष्ट्वा सुतमसौ हृष्टः कारागृहममोचयत् ॥३२॥
षष्ठीजागरणे जाते प्राप्तेऽथ दशमे दिने ।
अर्चां विधाप्य चैत्येषु सम्मान्य च गुरुव्रजम् ॥३३॥
इन्द्रवाहनमद्राक्षं स्वप्नेऽहमिति चिन्तयन् ।
हरिवाहननामानं तं चकार धराधिपः ॥३४॥ युग्मम् ।
तस्योपचर्यमाणस्य पञ्चधात्रीभिरन्वहम् ।
क्रीडतः शिशुभिः सार्धं दशार्द्धं शरदां ययौ ॥३५॥
कुमारस्य क्रमात् तस्यावयवेषु दिने दिने ।
वर्द्धमानेष्ववर्द्धन्त स्पर्द्धयेवाधिकं गुणाः ॥३६॥
षष्ठेऽथ हायने स्पष्टवर्णीभूतवचःक्रमम् ।
कृत्वाऽर्चां भूपतिर्विद्यागुरुभ्यस्तमुपानयत् ॥३७॥
निबिडप्रतिभानावा तीर्णविद्यामहार्णवम् ।
षोडशे हायने सूनुमानिनाय निजालयम् ॥३८॥
तदर्थमथ पृथ्वीभृद् वाजिशालाविराजितम् ।
कुमारगृहमुत्तुङ्गं पुराद् बहिरकारयत् ॥३९॥
युवराजपदं चास्मै दित्सुः साहायिकाय सः ।
कञ्चित् तुल्यवयःशौर्यमन्विरयेष नृपात्मजम् ॥४०॥
अथास्थानस्थितं सूनुं सेव्यमानपदाम्बुजम् ।
प्राञ्जलिस्तं प्रतीहारी प्रविश्येति व्यजिज्ञपत् ॥४१॥

---

१ सो । २ ष्टे । ३ ङाश । ४ तं । ५ स्तनु ।

आस्ते विजयवेगाख्यः संप्राप्तो दक्षिणापथात् ।
वज्रायुधचमूभर्त्तुः प्रधानपुरुषो वहिः ॥४२॥
तदादेशात् प्रधानं तमथ प्रावेशयद् द्रुतम् ।
अर्पितोपायनः सोऽपि नत्वा नृपमुपाविशत् ॥४३॥
तं च पप्रच्छ सेनान्यः कुशलं कोशलेश्वरः ।
स प्राह कुशलं देव ! युष्मत्पादप्रसादतः ॥४४॥
मद्वाचा वक्ति सेनानीः प्रणामं स्पृष्टकुट्टिमम् ।
भूपा भीमादयोऽप्यंह्रिपद्मं शेखरयन्ति वः ॥४५॥
पुनर्जगाद देवेन पुरा बालारुणाभिधम् ।
यदङ्गुलीयकं प्रैषि सेनान्या तदियच्चिरम् ॥४६॥
धृतं पार्श्वेऽधुना शत्रून् वशीकृत्य ममार्पितम् ।
उपनीतं मयाऽप्यद्य रत्नाध्यक्षमहोदधेः ॥४७॥ युग्मम् ।
ससम्भ्रमोऽथ भूपालस्तमालपदहो ! वद ।
रणे तेन कृतः कश्चिदुपकारश्चमूपतेः ॥४८॥
सोऽपि विज्ञापयामास देव ! तेन स कश्चन ।
कृतो यं न करोत्यन्यः श्रूयतां कथयामि तत् ॥४९॥
परुद्वर्षस्य वर्षान्ते कुण्डिनाद् दण्डनायकः ।
काञ्चीं प्रत्यचलज्जेतुं नृपं कुसुमशेखरम् ॥५०॥
सोऽपि स्वल्पवलत्वेन चतुरङ्गरणाक्षमः ।
चकार दुर्गसंस्कारमारब्धभटसंग्रहः ॥५१॥
अन्वहं च पुरं काञ्चीं दूषिताब्जजलाशयाम् ।
प्रज्वालितवहिःकक्षामात्तधान्यतृणेन्धनाम् ॥५२॥
उदक्तवापिकापङ्क्तिं निषिद्धानाप्तसञ्चराम् ।
चाराख्यातारिपूदन्तां यन्त्रदन्तुरगोपुराम् ॥५३॥
आहूतासन्नभूपालरुद्धाट्टालककुट्टिमाम् ।
योधाभिर्पालितोत्तुङ्गप्राकारामकरोत् ततः ॥५४॥ कुलकम् ।
रुरोध क्रोधदीप्तस्तां सेनाधीशः स्वसैनिकैः ।
भक्तः प्रभौ नवातङ्कां लङ्कामिव हरीश्वरः ॥५५॥

१ उद्गणितं । २ ञ्ची । ३ पं । ४ गा । ५ लि । ६ मा । ७ त्तं ।

अथाहतसमित्तूर्यमन्योऽन्यकृततर्ज्जनम् ।
उन्मुखाधोमुखक्षिप्तपत्रिच्छन्ननभस्तलम् ॥५६॥
यन्त्रगोलकनिष्पिष्टसादित्रस्ततुरङ्गमम् ।
अग्नितैलच्छटादह्यमानकूर्चजनाकुलम् ॥५७॥
द्विपाहतकपाटोग्रध्वानानुप्रहितोपलम् ।
स्फुरच्छन्ननरवातखातप्राकारभूतलम् ॥५८॥
खण्डीघटद्भटस्कन्धमञ्जद्भल्लभयङ्करम् ।
वप्रस्थै रिपुभिः सार्द्धं तस्य युद्धमभून्महत् ॥५९॥
एवं च देव ! तौ काञ्चीरक्षणग्रहणोद्यतौ ।
गाढं नवोढदम्पत्योः कराविव चिरं स्थितौ ॥६०॥
एकदा तु मधौ कामत्रयोदश्यां बृहन्निशि ।
स्वावासं राजके याते संवृतास्वापणालिपु ॥६१॥
स्फोटितेभकटच्छिद्रः प्रोत्साहितमहाभटः ।
अकस्मात् कटकेऽस्माकमभूत् कलकलो महान् ॥६२॥ युग्मम् ।
श्रुत्वा च जातावस्कन्दपातशङ्कश्चमूपतिः ।
आत्तासिफलको राजकुलाज्झटिति निर्ययौ ॥६३॥
अथोत्पर्याणवाजिस्थावायान्तौ वर्म्मितोरसौ ।
दृष्ट्वाऽश्ववारौ[3] पप्रच्छ क्षोभः किमयमित्यसौ ॥६४॥
नत्वा तावूचतुः स्वामिन्नुत्तराशाप्रतोलितः ।
शत्रुसैन्यं विनिर्यातमायातं विद्धि चाधुना ॥६५॥
तन्निशम्याथ सेनानी रथमारुह्य सायुधम् ।
रणक्षमां क्षमां सज्जसैनिकानुगतो[4] ययौ[5] ॥६६॥
सैन्ये च रचितव्यूहावर्त्ते मुखरिताम्बरः ।
पपातारात्यवस्कन्दः सरित्पूर इवार्णवे ॥६७॥
तं च प्रतीप्सुरच्छिद्रविशिखासारवर्षिणम् ।
धावित्वाऽभिमुखादग्रानीकं स्वकनृपाः शरैः ॥६८॥
परस्परवधाबद्धकक्षयोश्च तयोः क्षणात् ।
स्वर्गस्त्रीमृग्यमाणेष्टवैरो रक्तापगाऽऽविलः ॥६९॥

१ न्म। २ स्पि। ३ रो। ४ ता। ५ यै। ६ प्य।

नृत्यदुत्तालवेतालः शिवाफेत्कारडामरः ।
हस्तित्रासितवाहौघः सञ्जज्ञस्तुमुलोऽजनि ॥७०॥
उत्थिते रजसि क्षोभादज्ञातस्वपरान्तरे ।
नृपेषु क्षीयमाणेषु पादातेषु पतत्सु च ॥७१॥
रात्रौ त्रिभागशेषायां कोऽपि भूपाङ्गदारकः ।
अस्मद्व्यूहे ज्वलन्मन्युरभिमन्युरिवापतत् ॥७२॥
तमुग्रं प्रतिजग्राह पृषत्कैः पृतनापतिः ।
पृतनाषाडिव ग्रीष्मं महोष्माणं घनाम्बुभिः ॥७३॥
तत्र स वज्रायुधो वज्रायुध इत्युद्धतं ब्रुवन् ।
दत्तशब्दे वज्राधीशे शरा[1]द्वैतं व्यधत्त सः ॥७४॥
इत्थं रथस्थयोः[2] पार्थकर्णयोरिव धन्विनोः ।
शतशः समजायेतां तयोर्जय-पराजयौ ॥७५॥
दण्डाधिपधनुर्दण्डच्छेदमेदुरपौरुषे ।
रिपौ खिन्नः क्षणादेव देवादेशं तमस्मरम् ॥७६॥
अनिच्छतश्चमूभर्त्तुरङ्गुलीयकमङ्गुलौ ।
कृपाणग्रहणव्यग्रकरस्यालक्ष्यमक्षिपम् ॥७७॥
समीपदीपिकातेजःपुञ्जमञ्जरितद्युतिः ।
निद्रामुन्निद्रयामास विश्ववैरिभटेषु तत् ॥७८॥
अथाकण्टकचानीव नेमुर्मूर्द्धानि धन्विनाम् ।
मदमग्नामिवोद्धर्तुं शेकुर्नाधोरणाः सृणिम् ॥७९॥
पत्तीनां जघने पेतुः कराः कष्टुमिव क्षुरीम् ।
निःश्वासानमुचन् वाहप्रेरणायेव सादिनः ॥८०॥
सूतानाममिलद् देवीदर्शनाप्तमदेव दृक्[6] ।
निद्रावेशवशादेवं विह्वले द्विषतां बले ॥८१॥
राजपुत्रोऽपि स क्षत्रवर्म्मादुन्मुक्तकार्मुकः ।
आकृष्टासिद्रुतं निद्रावेशादथ रथेऽपतत् ॥८२॥
तद्वधार्थमथ क्रोधादधावन् निजसैनिकाः ।
देवाज्ञया च सेनानीरुद्बाहुस्तानवारयत् ॥८३॥

१ म । २ र्यो । ३ सः । ४ शृ । ५ स्वा । ६ ग् ।

वन्यमानव्रणोद्वान्तरक्तबिन्दूत्करं भटैः ।
दृष्टशौर्यगुणाकृष्टचेताश्च तमुपागतम् ॥८४॥
पश्यंस्तादृगवस्थं तं स्थित्वा खिन्नमना मनाक् ।
चामरग्राहिणीं दृष्ट्वा पप्रच्छासौ सचेतनाम् ॥८५॥
भद्रे ! कोऽयं सुतः कस्य किमर्थं चामुना कृतम् ।
ऊढक्षात्रनयेनापि छद्मयुद्धमियन्निशि ॥८६॥
प्रमृज्याश्रूणि साऽवोचत् किमस्याद्य निवेद्यते ।
तथापि कथयाम्येषा मन्दभाग्या तवाग्रहात् ॥८७॥
अयं हि सिंहलद्वीपे चन्द्रकेतोर्महीभृतः ।
पुत्रः समरकेतुः प्राक् गतोऽभूद् द्वीपभूभुजाम् ॥८८॥
जयाय कटके तस्मादकस्मात् पितुराज्ञया ।
राज्ञः काञ्चीपतेः कर्तुं साहायकमिहागमत् ॥८९॥
ततोऽद्यदिनमुद्याने कामायतनमास्थितः ।
यात्रायातपुरीनारीलोकमालोकयन्नयम् ॥९०॥
केनापि हेतुना सायमुन्मना मदनालये ।
शयिष्येऽहमिहैवेति विससर्ज परिच्छदम् ॥९१॥
आगत्याथ निशीथेऽसौ वाहिनीं समनीनहत् ।
नायं क्रमो नयस्येति वार्यमाणोऽपि मन्त्रिभिः ॥९२॥
अनाप्तेन स्पशेनेव दैवेनाकृष्य संप्रति ।
इमां भुवमवस्थां च कुमारोऽयमनीयत ॥९३॥
एवं वदन्त्यामेवास्यां सिंहलेन्द्रप्रजामिव ।
स्फुरद्बालारुणज्योतिर्ज्योतिरालीममीलयत् ॥९४॥
तस्मिंस्त्वैरिविजयाभिलाषद्रवखर्विते ।
तेजस्युज्जृम्भिते देव ! प्रताप इव भापतेः ॥९५॥
कुमारः स जजागार वज्रायुध ! किमायुधम् ।
न गृह्णासीति सञ्जल्पन् पूर्वसङ्कल्पसम्भ्रमात् ॥९६॥
अस्मदन्तःप्रविष्टं च किञ्चिदुन्मीलितेक्षणः ।
क्षीणतेजा ददर्श स्वं दर्शेन्दुरिव सूर्यगम् ॥९७॥

---

१ श्यां । २ श्रे । ३ ह्ना ।

अनूत्थितवलं तं च सेनानीः शौर्यविस्मितः ।
सिन्धुरस्कन्धमारोप्यावासे प्रावेशयन्निजे ॥९८॥
तत्रास्य पट्टबन्धादि व्रणेषु विदधे स्वयम् ।
सञ्जाङ्गं च तमाहूय सराजकमभोजयत् ॥९९॥
ताम्बूलवस्त्रालङ्कारदानावर्जितचेतसम् ।
प्रत्यर्पितरणोपात्तद्विपाश्वं तमथावदत् ॥१००॥
मय्यनुग्रहबुद्धिश्चेत् तत्प्रभुत्वं गृहाण मे ।
अस्मिस्तुच्छे न चेदिच्छा तदाध्यस्व निजं पदम् ॥१०१॥
जितश्चाहमनेनेति खेदं मनसि मा कृथाः ।
प्रभावः कोऽपि सोऽन्यस्य कोऽहं तव पराजये ॥१०२॥
[य]द्वा किं तेन पश्येदं त्वद्बलम्लानिकारणम् ।
इत्युक्त्वाऽदर्शयत् तस्मै विस्मितायाङ्गुलीयकम् ॥१०३॥
कुत एतदिति पृष्टः स्वामिनः स्वर्गिदर्शनात् ।
प्रारभ्य श्रीप्रसादान्तं वृत्तान्तं सर्वमभ्यधात् ॥ १०४॥
अथात्मनि श्लथावज्ञः सोऽप्यवादीच्चमूपते ! ।
त्वयैवं गतगर्वेण दूरान्मे[1] प्रीणितं मनः ॥१०५॥
आस्तामन्यत् तमेवेन्द्रसदसि ख्यातविक्रमम् ।
साहसाऽऽवर्जितश्रीकं महीशं मम दर्शय ॥१०६॥
मयाऽथ कृतसेवं तं प्राहिणोद् वाहिनीपतिः ।
अथागत्य स चामुञ्चच्छिबिरं सरयूतटे ॥१०७॥
एवं विजयवेगेन प्रोक्ते तद्वृत्तविस्मितः ।
आदिशद् द्वाःस्थमास्थाने तमानेतुं महीपतिः ॥१०८॥
तेनानीतं विनीतेन राजपुत्रविराजितम् ।
प्रसन्नदृष्टिरष्टाङ्गप्रणामस्पृष्टकुट्टिमम् ॥१०९॥
एह्येहीति तमाहूय बाहुभ्यामङ्कमानयत् ।
आश्लिष्टमुक्तमासन्नसन्निविष्टमुवाच सः ॥११०॥ युग्मम् ।
श्रुतः श्रोत्रे यथा कामं जिगीषुस्तव पौरुषम् ।
आनन्दय तथा वत्स ! वीक्षितुं रूपमीक्षणे ॥१११॥

1 त्म ।

साहसेनाधिकं तुष्टा त्वां मे लक्ष्मीरलक्षितम् ।
दिव्याङ्गुलीयकव्याजाद् द्वितीयं तनयं ददौ ॥११२॥

राज्यं समानमेतत् ते कुमारेणामुना समम् ।
तदाऽऽस्वे विश्वमप्यत्र कामितं तव सेत्स्यति ॥११३॥

अथ न्यस्तदृशं तस्मिन्नुवाच हरिवाहनम् ।
असौ समरकेतुस्ते सहायः परिकल्पितः ॥११४॥

अयं भ्राता च भृत्यश्च सर्वस्वं च सखा च ते ।
आत्मनीव त्वयाऽमुष्मिन् भवितव्यं हितैषिणा ॥११५॥

इत्यादिश्योत्थिते राज्ञि तदाज्ञां मूर्ध्नि धारयन् ।
कुमारस्तं करे धृत्वा सौधादन्तःपुरं ययौ ॥११६॥

प्रणामानन्तरं देव्यास्तद्वृतान्तं निवेद्य सः ।
तेनाऽथ लब्धवर्णेण सार्द्धं स्वावासमासदत् ॥११७॥

तत्र स्नानाशनक्षौमभूषणैस्तं नृपाङ्गभूः ।
उपाचरत् तथा नायं यथा स्वं स्थानमस्मरत् ॥११८॥

सोऽपि पल्लवितप्रीतिस्तं समाराधयत् तथा ।
तं यथाऽमन्यताऽभिन्नमात्मनो हरिवाहनः ॥११९॥

पवित्रेऽथ दिने पुत्रं जगन्नेत्ररसायनम् ।
व्यधाद् विश्वकलाभाजं युवराजं धराधिपः ॥१२०॥

तस्मै कश्मीरदेशाद्यं प्रसादेनोत्तरापथम् ।
अदादङ्गादिदेशांश्च वृत्तौ समरकेतवे ॥१२१॥

दुःसाधैरसिधेनुधन्वखुरलीखेलायितैर्जातुचिद्
जातु प्राक्तन[नव्य]काव्यनयविद्ग्रन्थार्थविस्तारणैः ।
वीणावेणुमृदङ्गभङ्गिसुभगैर्गीतैः कदाचित् तयो–
श्चित्तागन्तुककामितं कलयतोः कालः कियानप्यगात् ॥१२२॥

इति [श्रीतिलकमञ्जरीसारे] मित्रसमागमो नाम
द्वितीयो विश्रामः। (इति द्वितीयं प्रयाणकम्)

---

१ श्व ।-२ स्मी ।

## अथ तृतीयं प्रयाणकम् ।

अन्यदाऽभ्यागते ग्रीष्मे समं समरकेतुना ।
मत्तकोकिलमुद्यानं कुमारः क्रीडितुं ययौ ॥१॥
तन्मध्यगतमध्यास्त रचितं सरयूतटे ।
उद्दण्डमण्डलाकारकदलीखण्डमण्डितम् ॥२॥
नालनिर्यत्पयोयन्त्रपुत्रिकाराजिराजितम् ।
अकालजलदारम्भमञ्जुलं जलमण्डपम् ॥३॥ युग्मम् ।
राजपुत्रैः समं तत्र काव्यगोष्ठीमधिष्ठिते ।
कुमारे व्याजहारेदं बन्दी मञ्जीरकाभिधः ॥४॥
कुमार ! कामचैत्येऽस्य चूतस्याधो मधूत्सवे ।
अतीतायां त्रयोदश्यामपश्यं पत्रखण्डकम् ॥५॥
ततस्तमहमुन्मुद्र्य मुद्रितं कुचमुद्रया ।
आर्यामवाचयं[र]तत्र कस्तूरीलिखिताक्षराम् ॥६॥
न मया स्वधियाऽबोधि चिरं चिन्तयताऽपि सा ।
तदेतस्या रहस्यं मे कथ्यतामिति सोऽपठत् ॥७॥
"गुरुभिरदत्तां वोढुं वाञ्छन् मामक्रमात् त्वमचिरेण ।
स्थाताऽसि पत्रपादपगहने तत्रान्तिकस्थाग्निः ॥८॥"
निशम्य चैतामन्येषु प्राज्ञमन्येषु मूकताम् ।
गतेषु स तदैवाह मेघवाहननन्दनः ॥९॥
सखे ! पञ्चेषुलेखोऽयं कयाऽपीश्वरकन्यया ।
गाढानुरागया पूर्वं जातालापस्य कस्यचित् ॥१०॥
तत् त्वं तव गुरुभिर्न दत्ता याचिताऽपि मे ।
तत् त्वां प्राणेश्वरीं कर्तुं बलादिच्छेति मे मनः ॥११॥
इति लेखादिना स्वामिप्रायस्य [प्रिय]मानिनः ।
यूनः सम्प्रेषितं कार्यमेतदत्र विवक्षितम् ॥१२॥
त्वं मामकारणाद् द्विष्टैरदत्तां पितृभिः पथा ।
अरूढेण समुद्वोढुमिच्छन् न्यायी तदस्तु मा ॥१३॥
यतः कतिपयैरेव दिनैः स्थाताऽसि यत्र नौ ।
दर्शनं प्रागभूत् तत्र पत्रप्रायद्रुकानने ॥१४॥

---

१ ष्ठी । २ ष्टि । ३ खा । ४ त्वि । ५ त्वं । ६ स्थ । ७ स्व ।

वह्निना कृतसांनिध्यः स्थितश्चेहाग्निसाक्षिकम् ।
प्रीतये मम कर्त्ताऽसि पाणिग्रहणमङ्गलम् ॥१५॥ युग्मम् ।
अर्थोऽपरोऽपि गुरुभिर्मामदत्तामधर्मतः ।
इच्छन् नारकतां प्राप्य समीपज्वलितानलः ॥१६॥
द्रुमाणामसिपत्राणां स्थाता त्वं गहने द्रुतम् ।
इति शापात्मको यस्तु केवलं गोपनाय सः ॥१७॥
इत्युक्ते प्रतिभां दृष्ट्वा हारिणीं हारिवाहनाः ।
जहृषुः सुहृदः सर्वे विना समरकेतुना ॥१८॥
ततश्चिन्तातमःस्पर्शदुर्दर्शेमुखचन्द्रके ।
चन्द्रकेतुसुतेऽवोचत् कोशलेश्वरनन्दनः ॥१९॥
यत् ते हर्षश्रियं खेदः सखे ! दस्युरिवाहरत् ।
तन्न त्वमपि संस्पृष्टो भावैरेभिः कदाचन ॥२०॥
प्रमृज्याश्रूणि सोऽप्याह कुमार ! किमु कथ्यते ? ।
त्वया हि मन्मनोवासादिवाऽसादि ममाशयः ॥२१॥
अवुद्ध शुद्धधीः सर्वं मन्ये सामान्यतो भवान् ।
आज्ञां प्राप्य तथाऽप्येष विशेषाय सखे ! ब्रुवे ॥२२॥
अनङ्गरङ्गशालेव रङ्गशालेति विश्रुता ।
सिंहलेषु पुरी तत्र तातः प्रख्यात एव मे ॥२३॥
नवीनयौवनं यौवराज्ये प्रागभिषिच्य माम् ।
दुष्टद्वीपावनीपालजयाय प्रजिघाय सः ॥२४॥
ततो जयगजारूढः प्रौढराजन्यराजितः ।
मङ्गलोज्जागरां पश्यन् नगरीं निरगामहम् ॥२५॥
कैश्चित् प्रयाणैः ग्रामीणविलोकितवलाऽऽगतिः ।
आगत्य नीरधेस्तीरे शिविरं सैन्यवेशयम् ॥२६॥
कृताकृतं च तत्रस्थो यावन्नावां विभावये ।
तावन्नाविकमद्राक्षमायान्तं धीवरावृतम् ॥२७॥
कोऽयं सुभगया मूर्त्या कैवर्तेषु विलक्षणः ।
इति नौसाधनाध्यक्षमप्राक्षं यक्षपालितम् ॥२८॥

१ ता । २ द । ३ न्नि । ४ धि ।

सोऽप्याह केवलं नैषां धीवराणां विलक्षणः ।
अन्येषामपि तेनास्य श्रूयतां चरितं नवम् ॥२९॥
सुवर्णद्वीपमध्येऽस्ति पुरं मणिपुराभिधम् ।
तत्र सांयात्रिकः पात्रं श्रीणां वैश्रवणाह्वयः ॥३०॥
प्रियाऽस्य वसुदत्ताऽभूद् दारकस्तारकस्तयोः ।
आरूढो यौवनं यानपात्रं चैष क्रमागतम् ॥३१॥
आगत्याऽस्मत्पुरीं पारेऽकूपारं तस्य तस्थुषः ।
निर्यामेन सहाजर्यं सञ्जज्ञे जलकेतुना ॥३२॥
धीवराधिपतेस्तस्य कदाचिन्नवयौवना ।
शापभ्रष्टेव दिव्यस्त्री तनया प्रियदर्शना ॥३३॥
हारमादाय तद्गेहमागमत् पितुराज्ञया ।
दृष्टश्च स तया रूपदर्शनोद्भूतरागया ॥३४॥
अर्पितोपायना चास्मै क्षणं स्थित्वा विसंस्थुलम् ।
कृतोपचारा तेनाथ जगाम निजमन्दिरम् ॥३५॥
तया च बालया नित्यं तदालोकनलोलया ।
आरेमे च्छद्मभिस्तैस्तैरेहिरेयाहिराक्रिया ॥३६॥
एकदा च तदावासविलासवलभीतले ।
रममाणां समं सख्या सम[ा]यातामियाय सः ॥३७॥
तद्दर्शनवशोल्लासिसाध्वसा सा तु सत्वरम् ।
व्रजन्ती स्खलिता तत्र पदैः कम्पविशृङ्खलैः ॥३८॥
स्खलन्त्याश्च समागत्य द्रुतं सोपानसन्निधौ ।
तेनावलम्बितस्तस्या दक्षिणः पाणिपल्लवः ॥३९॥
ततः सलीलमालाऽपि सस्मितेन नताङ्गि ! किम् ।
इदं समेऽपि स्खलनं तदलं संभ्रमेण ते ॥४०॥
आत्मानं संवृणु क्षोभगलद्वक्षोजवाससम् ।
विहाय विह्वलीभावं सम्भावय निजं गृहम् ॥४१॥
साऽपि तत्पाणिसंश्लेषाद् विशेषाकृष्टधन्वना ।
कृतसाहायकेनेव कामेन ध्वस्तसाध्वसा ॥४२॥

गुरुणा चानुरागेण कृतचातुर्यसंस्तवा ।
ह्रियं पिधाय मुग्धाऽपि विदग्धेवेदमभ्यधात् ॥४३॥
त्वया पाणौ गृहीतेऽस्मिन् कुमार ! किमु शक्यते ।
विवशं संवरीतुं स्वं प्रयातुं वा गृहान्तरम् ॥४४॥
जातं निजं तवागारमिदानीमिदमेव मे ।
इत्युक्त्वा च नतमुखी पदाग्रेणाऽलिखद् भुवम् ॥४५॥

असावपि युवा तस्याः सम्भ्रमावस्थया तया ।
अमृतस्यन्दशीतेन करस्पर्शेन तेन च ॥४६॥
उक्तिभङ्ग्या तया चात्मसमर्पणसमर्थया ।
हृतचेताः समालिङ्गत् तामामीलितलोचनाम् ॥४७॥ युग्मम् ।

गृहान्तरं च गन्तव्यमिति चेत् तन्वि ! निश्चयः ।
तत् किमेकेन गेहेन प्राणा अपि वशे तव ॥४८॥
इत्युदीर्य परिग्राह्यं स्त्रीरत्नं दुष्कुलादपि ।
इति प्रमाणयन् पक्षमनपेक्ष्य निजान्वयम् ॥४९॥

साक्षीकृत्य क्षणे तत्र ज्वलन्तं मन्मथानलम् ।
पुनर्गृहीतपाणिस्तामकरोज्जीवितेश्वरीम् ॥५०॥
सांयात्रिकस्य कस्यापि बालिका जलकेतुना ।
यानभङ्गादवाप्ताऽसौ पालिता स्वेव पुत्रिका ॥५१॥

इत्याख्यातेऽपि तत्त्वज्ञैः प्रार्थितोऽपि सहागतैः ।
लज्जयैव निजं स्थानं न जगाम स कामुकः ॥५२॥
आस्थानोपस्थितं चैतं देवस्तद्वृत्तविस्मितः ।
व्याजहार परीहासपेशलं चापलं प्रति ॥५३॥

जामातृप्रतिपत्त्या च वितीर्य बहुजीवनम् ।
विश्वनाविकतन्त्राणां तं त्रातारमसूत्रयत् ॥५४॥

तत्राधिपत्यं तेनाथ तन्वता सकलाः कलाः ।
कलिता नौप्रचारस्य स चायमवधार्यताम् ॥५५॥

स्पृशेन्नैवेपदप्येष वणिग्जातिसजन्मना ।
भयेन किल कैवर्त्तकुलसम्पर्क्कशङ्कया ॥५६॥

तदेष युज्यते नेतुं त्वनावः कर्णधारताम् ।
प्रभूणां च कवीनां च यथौचित्यं पदार्पणम् ॥५७॥
तस्मिन्निति वदत्येव कैवर्त्तेशः समेत्य सः ।
प्रगल्भमभ्यधान्नित्यप्रणयीव प्रणम्य माम् ॥५८॥
अयं कुमार ! नौवारः सङ्गराय विनिर्मितः ।
पराकाष्ठागतगुणप्रबन्धैरतिभासुरः ॥५९॥
पूर्णश्चित्रैः सचारित्रैः परोपकरणैरपि ।
अधिष्ठितस्त्वया तुल्यसंयोगप्रीतिमञ्चतु ॥६०॥
अहमप्यथ पाथोधेः पूजाकल्पे प्रकल्पिते ।
क्रमेण यानपात्राणि पवित्रयति राजके ॥६१॥
तारकेण धृतारित्रां चित्रांशुकपताकिकाम् ।
नावं विजययात्राख्यां यात्रार्थमधिरूढवान् ॥६२॥
याम्यां सीमन्तयन्नाशामब्धिलङ्घनहेतुना ।
सेतुनेव ततो गन्तुं नौचक्रेण प्रचक्रमे ॥६३॥
उद्दीपितमदान् द्वीपभूपान् दुष्टद्विपानिव ।
निरङ्कुशप्रचारोऽपि दर्पमत्याजयं ततः ॥६४॥
उल्लङ्घ्य जलधिद्वीपान्[१] सुवेलं शैलमव्रजम् ।
तत्र न्यवेशयं सैन्यमन्येद्युः प्रेरितश्चरैः ॥६५॥
चौर्यपल्लवितं पल्लीपतिं पर्वतकाह्वयम् ।
अगां विजेतुं सङ्ग्राममक्षमनौसैन्यसंयुतः ॥६६॥ युग्मम् ।
निर्जित्य शबरेशं तं शिबिराभिमुखोऽभवम् ।
अथात्रिभट्टपुत्रो मां समयज्ञो व्यजिज्ञपत् ॥६७॥
कुमार ! दृश्यते योऽयमनन्तमणिभासुरः ।
सानुमान् रत्नकूटोऽसौ जटाजूट इवेश्वरः ॥६८॥
अत्र पुण्यसरित्पूर्णे सुवर्णकपिशद्युतौ ।
निर्गत्य नीरधेः स्थातुं युक्तं तव कलावतः ॥६९॥
यतः क्लान्तं बलं रात्रियामत्रितयजागरात् ।
इति श्रुत्वाऽस्मि विश्रान्त्यै सैन्यं तत्र समादिशम् ॥७०॥

---

१ अ । २ त । ३ तै ।

भेरीनादश्रवाद् यानपात्रेषु विधृतेषु च ।
पर्वतालोकरभसाल्लोकः शीघ्रमवातरत् ॥७१॥
तदा तदद्रेर्वायव्यकोणाद् दिव्यो समाभवत् ।
मरुत्तरङ्गितः श्रोत्रसङ्गी सङ्गीतकध्वनिः ॥७२॥
ततस्तत्प्रभवालोकलोलचेताश्च तारकम् ।
आदिशं तां दिशं गन्तुं नावं प्रवणयेत्यहम् ॥७३॥
सोऽप्युवाच श्रुतचरी गीतिरस्यां दिशीदशी ।
मयाऽन्यैश्च परं ज्ञातुं प्रभवं कोऽपि न प्रभुः ॥७४॥
अस्याद्रेः पक्षमेतं हि क्षमेत विषमेऽम्बुधौ ।
ग्रावग्राहमहावर्त्तैर्न तरीतुं तरीरपि ॥७५॥
तथापि स्थापितं देव! चेतश्चेन्निश्चये त्वया ।
तद् गम्यते किमीशानामादेशो हि विमर्शनैः ॥७६॥
इत्युक्तेऽप्रेरयं नावं तेनेषुमिव धन्वना ।
तं दक्षिणाक्षिस्फुरितहस्तालम्बादनुध्वनिम् ॥७७॥
सोऽपि श्रावादिपूपायैस्तैस्तैरस्खलितां ततः ।
प्रावर्त्तयन्निजां कीर्तिमङ्गिनीमिव मङ्गिनीम्* ॥७८॥
अनुकूलानिलात् तस्यां लङ्घिताध्वनि स ध्वनिः ।
विरतोऽथ स्थिरीकृत्य तरिकां तारकोऽवदत् ॥७९॥
स्थितेऽध्वपिशुने ध्वाने नास्ति द्वेधाऽपि नौगतिः ।
त्रपयाऽहमपि द्वैधमवाग्वक्त्रस्ततोऽभवम् ॥८०॥
अचिन्तयं च ही जातं लाघवं मे शिशोरिव ।
कौतुकादविमृश्यैव ध्वानमुद्दिश्य धावतः ॥८१॥
ततो दिव्यं श्रुतं गीतं गिराविति तदाशया ।
आकृष्टोऽङ्कमृगेणेव प्रत्यग्गिरिमगाद् विधुः ॥८२॥
अहो! महाफलं कर्म्म कृतं नीतिविदाऽमुना ।
इतीव विजहासोच्चैर्जम्भारिककुभि प्रभा ॥८३॥
ततोऽहं विक्षिपन् दिक्षु चक्षुरद्राक्षमग्रतः ।
देवतायतनं रत्नरश्मिकर्बुरिताम्बरम् ॥८४॥

१ यान । * Betrothed. २ श ।

निःक्रामदस्मात् खे चक्रं खेचराणां विलोक्य च ।
तारकेण तरीं स्मेरश्चैत्यान्तिकमनाययम् ॥८५॥
ततस्तत्र प्रवेशाय यावद् द्वारं विभावये ।
तावदक्कशिमेदुर्लक्ष्याकारप्राकारकुट्टिमे ॥८६॥
अपश्यं चित्रकस्तूरीपत्रभङ्गाङ्कितैर्मुखैः ।
कुर्वाणं कन्यकावृन्दं शतचन्द्रं नभस्तलम् ॥८७॥ युग्मम् ।
तन्मध्ये चातपत्रेण दर्शयन्ती सितद्युतिम् ।
विडम्बयन्ती डिण्डीरवल्लरीश्चलचामरैः ॥८८॥
कल्लोलयन्ती लावण्यसलिलैर्लवणाम्बुधिम् ।
उल्लासयन्ती ललितैः कटाक्षैरमृतच्छटाः ॥८९॥
अप्सरोभिः सहाम्भोधेः पुनर्लक्ष्मीरिवोद्गता ।
द्विरष्टवर्षदेशीया मयाऽदृश्यत कन्यका ॥९०॥
इत्थं कथारसाक्षिप्तलोके समरकेतुना ।
कथ्यमाने स्ववृत्तान्ते प्रतीहारी व्यजिज्ञपत् ॥९१॥
कुमार! कर्णपीयूषं चिरं पीतं कथारसात् ।
क्षणमीक्षणपीयूषमिदानीं पीयतामिति ॥९२॥
ततश्चित्रपटं किञ्चिन्न्यञ्चद्दपुरुपानयत् ।
कुमारोऽपि तमुद्वेष्ट्य दृष्टवांश्चित्रपुत्रिकाम् ॥९३॥
तारुण्यपादपानूपकन्यकारूपधारिणीम् ।
उदारवेषसंश्लेषविशेषसुभगाकृतिम् ॥९४॥
गृहीताङ्गमिवानङ्गवीरस्य विजयश्रियम् ।
विस्मितः सिंहलाधीशसुतादीनामदीदृशत् ॥९५॥
अभ्यधाच्च शुभे चित्रमिदमासादितं कुतः? ।
इति पृष्टा प्रतीहारी व्याजहारावधार्यताम् ॥९६॥
कुमार! रममाणाऽस्मिन्नपश्यं पथिकद्वयम् ।
तयोरेकेन पृष्टाऽस्मि भद्रे! कोऽयं नृपात्मजः ॥९७॥
यस्याऽयं दृश्यते दृश्यवेषो युष्मादृशो जनः ।
वैदेशिकं विदित्वा तं ततः प्राञ्जलमालपम् ॥९८॥

१ स्म । २ क्षा ।

श्रूयतामेष निःशेषनरेश्वरशिरोमणेः ।
श्रीमेघवाहनस्य श्रीप्रसादासादितः सुतः ॥९९॥
द्वासप्ततिकलाधामा नामतो हरिवाहनः ।
दिदृक्षुश्चेत् त्वमेनं तद् दर्शय सौम्यदर्शनम् ॥१००॥
सोऽवोचदुचितं सौम्यो राजपुत्रस्त्वया पुनः ।
जल्पन्त्या तं कलावन्तं चित्रमाविःकृतं मम ॥१०१॥
तदाविःकुरु तस्यापि पुरश्चित्रमिदं मम ।
त्वामनुप्राप्त एवाहमित्युदीर्यार्पयत् पटम् ॥१०२॥
निवेदयति सा यावदेवं तावदुपाययौ ।
दिव्याकृति कुमारस्य दृक्पथं पथिकद्वयम् ॥१०३॥
प्रावेशयत् तदादेशाद् द्वाःस्था तावथ्वगावथ ।
नत्वा कुमारमासीनौ पुरस्ताद् दापितासने ॥१०४॥
तयोरेकस्तमालोक्य त्रैलोक्यललिताकृतिम् ।
तत्र चित्रपटे मग्नविलोचनमवोचत ॥१०५॥
विश्राम्यति पटाच्चित्ते किञ्चित् ते दर्शनोचितम् ।
कश्चिदालेख्यदोषो वा विदुषैवं विभाव्यते ॥१०६॥
कुमारेणानुशिष्योऽस्मि कलाकौशलशालिना ।
कृतिरात्मविशेषाय विशेषज्ञेषु दर्शिता ॥१०७॥
व्याजहार कुमारोऽपि कोटिमारोपिता त्वया ।
चित्रा चित्रकला कालिदासेन कविता यथा *॥१०८॥
एतस्यां हि यथौचित्यं वर्णानां विनिवेशनम् ।
रुचिरावर्त्तना कापि स्थानेऽलङ्कारकल्पना ॥१०९॥
किञ्चाक्रीडागिरौ क्रीडां तन्वन्तीं सरसस्तटे ।
असंख्यशाखिनि सखीराजितां राजकन्यकाम् ॥११०॥
लिखता चित्रविज्ञानं विचित्रं सूत्रितं त्वया ।
केवलं पुरुषालेख्यकौशलं न प्रकाशितम् ॥१११॥
सोऽप्याख्यल्लिखिता कन्या पुरुषद्वेषिणी मया ।
पुंसो नारोपितं रूपमत्र चित्रपटे ततः ॥११२॥

* Note the poet's originality in the simile.

अधुना युज्यते रूपं तवैव लिखितुं मम ।
उत्सुकेन न तच्छक्यमौत्सुक्ये शृणु कारणम् ॥११३॥
अस्ति रत्नाढ्यवैताढ्यदक्षिणश्रेणिभूषणम् ।
चक्रवालोत्तरपदं नगरं रथनूपुरम् ॥११४॥
शस्त्रशास्त्रमहामन्त्रविद्यात्रयपवित्रितः ।
चक्रसेनाभिधस्तत्र चक्रवर्त्ती महाबलः ॥११५॥
एतस्य पत्रलेखायां महादेव्यामजायत ।
त्रिलोकीतिलकः कन्यारत्नं तिलकमञ्जरी ॥११६॥
बालभावेऽपि तां पुण्यप्रभावसुखसाधिताः ।
विद्याः सख्य इवासेदुर्भेदुरीभूतसौहृदाः ॥११७॥
अधुना यौवनारम्भमधुना मधुराकृतेः ।
जगन्नेत्रालिमालाभिः पीयमानं न हीयते ॥११८॥
लावण्यमधु यस्याः सा नव्या तिलकमञ्जरी ।
अत्र चित्रपटारामे लुलन्ती किल कल्पिता ॥११९॥
इत्थं कुमार ! कैलाशशैलादिवनराजिषु ।
रमतेऽनुमता पित्रा सा विमानविहारिणी ॥१२०॥
परमीदृग्विहारेच्छाविच्छेदाशङ्किनी किमु ? ।
किं विद्यासाधनोपात्तव्रतप्रान्तानुपालिनो* ॥१२१॥
किन्त्वे पूर्वभवप्रेयःप्रेमस्थेमनियन्त्रिता ।
इयं स्वप्नेऽपि नाद्यापि पुरुषं कमपीच्छति ॥१२२॥
ध्यात्वाऽथ विद्या प्रज्ञप्ती विज्ञप्ता पत्रलेखया ।
देव्या सुतावरार्थिन्या स्वप्ने साऽपि समादिशत् ॥१२३॥
त्वत्पुत्र्या भविता भर्त्ता भूगोचरनृपाङ्गभूः ।
प्रातर्मन्मातरं पुत्रीधात्रीं देवी ततोऽवदत् ॥१२४॥
चित्रलेखे दुहित्रेऽस्यै चित्राभ्यासापदेशतः ।
भूपालाङ्गभुवां विद्धरूपाण्यानीय दर्शय ॥१२५॥
मन्माता तान् तथानेतुं प्रैष्यान् प्रेष्य जगाद माम् ।
गन्धर्वक! तवाप्यन्यत् कृत्यमस्ति प्रयोजनम् ॥१२६॥

---

१ स । * अन्त=completion, fufilment. २ चा ।

प्रहितोऽसि परं देव्या निजतातस्य सन्निधौ ।
विचित्रवीर्यदेवस्य सुवेलाद्रौ प्रयोजनात् ॥१२७॥
तस्य विधाधरेन्द्रस्य विज्ञाप्यं मद्वचोऽप्यदः ।
मध्येरत्नाकरं रत्नकूटाद्रौ देवमन्दिरे ॥१२८॥
रात्रौ विहितयात्रेण तत्र देवेन या तदा ।
श्रुता गन्धर्वदत्तेति नामसाम्यभ्रमस्पृशा ॥१२९॥
सा सैव पुत्री देवस्य प्रिया काञ्चीपुरीपतेः ।
यन्मयाऽऽश्वासिता गत्वा ज्ञातेः कुशलशंसनात् ॥१३०॥ कुलकम् ।
निजप्रवासवृत्तान्तः पृष्टया च तया रहः ।
वैजयन्तीपुरीभङ्गप्रभृतिः कथितो मम ॥१३१॥
एवमावेद्य देवाय गत्वा काञ्चीं पुरीं ततः ।
गन्धर्वदत्तामाराध्य क्षणमागम्यतामिह ॥१३२॥
तद् गन्तव्यं द्रुतं कार्यान्मया व्याघुटता पुनः ।
लेख्यं रूपं कुमारस्य मम विघ्नः क्वचिन्न चेत् ॥१३३॥
तदादिश दिशस्तस्या आनेयं वस्तु किञ्चन ।
नेयः सन्देशको वेति स्थितेऽवादीन्नृपात्मजः ॥१३४॥
खेचरेन्द्रसुतारूपे त्वया त्रैलोक्यदुर्लभे ।
ममोपनीते नैवास्ति काऽपि वस्त्वन्तरस्पृहा ॥१३५॥
न च कश्चन सन्देशयोग्यस्तत्र समस्ति मे ।
पुनस्त्वद्दर्शनायैव गाढमुत्कण्ठते मनः ॥१३६॥
तं च ताम्बूलवस्त्राद्यैः सम्मान्य पुनरभ्यधात् ।
व्रज कार्याय विस्मार्या [1]गोष्ठीयं न कदाचन ॥१३७॥
अथार्पयत् कुमारेण लेखं सिंहलभूपभूः ।
काञ्च्यां मलयसुन्दर्या योग्यं तस्मै यियासवे ॥१३८॥
उदपतदथ नत्वा चित्रमायद्वितीयो वियति कलितलेखश्चित्रलेखातनूजः ।
करकमलनिलीनालेख्यलीलापटश्च स्वभवनमवनीन्द्रोरङ्गजन्मा जगाम ॥१३९॥

[इति श्रीतिलकमञ्जरीसारे] चित्रपटदर्शनो नाम तृतीयो विश्रामः॥

[इति तृतीयं प्रयाणकम् ।]

---

१ स्वा । २ ष्ठी ।

## अथ चतुर्थं प्रयाणकम् ।

स तत्राह्निकमह्नाय विधाय त्रिधिमुन्मनाः ।
ध्यानद्वारमिवोपांशु पटं तमुदजीघटत् ॥१॥

खेचरेन्द्रसुतां पश्यंस्तत्र चित्रलिपिस्थिराम् ।
चिरं तदनुवृत्त्येव चित्रन्यासस्थिरोऽभवत् ॥२॥

स्फूर्त्तौ मन्दायमानायां सायं नयनपद्मयोः ।
कथञ्चिदपि संवृत्त्य पटं राजकुलं ययौ ॥३॥

तातमाराधयत् तत्र क्रमेण जननीमपि ।
विधेयं न हि धीराणां महाधिरपि बाधते ॥४॥

अथावसथमागत्य शयनस्थानमास्थितः ।
असौ गन्धर्वकालापान् स्मारं स्मारमचिन्तयत् ॥५॥

प्रज्ञप्तिविधयाऽऽदिष्टं यन्नास्याः खेचरात्मजैः ।
भविष्यति वरः किन्तु भूमिवासवसम्भवः ॥६॥

इति सत्स्वपि पुष्पेपुरूपेषु नृपसूनुषु ।
अहं तस्याः स्वमेवोहे मोहेन प्रेमभाजनम् ॥७॥

किमेष्यति स विद्याभृत्पुत्रः प्रतिकृतिर्मम ।
लिखिष्यति कृतार्थां च करिष्यति तदीक्षणात् ॥८॥

तामिवात्र गुणैस्तत्र गमयिष्यति मामपि ।
ततो नु मय्ये[वोत्कं]पा तं पुनः प्रेषयिष्यति ॥९॥

इत्याद्यनल्पसङ्कल्पभेदैर्मे दुरितारतेः ।
जगाम शतयामेव त्रियामाऽप्यस्य कामिनः ॥१०॥

अनुत्सुक इव प्रातर्देवार्चादि विधाय सः ।
आदेश्यानादिशद् गन्तुं तदेवोद्यानमुद्यतः ॥११॥

आगमिष्यति गन्धर्व इत्यर्द्धगदितं वचः ।
अपालयत् तदा दृष्टिं निक्षिप्य परिवर्द्धके ॥१२॥

अयमागच्छतीत्युक्त्वा तेनानीतं तुरङ्गमम् ।
मनः स्वमिव जङ्घालमारुह्योपवनं ययौ ॥१३॥

---

१ ह्नि । २ । जाः । ३ । स । ४ प । ५ निक्षय परिवद्रके । ६ त्यक्त्वा ।

स्थितश्च तस्मिन्नारामे तामेवालेख्यबालिकाम् ।
निर्वर्ण्णयंश्चिरं तस्थौ चित्रैर्विद्धि[र्विचारयन्] ॥१४॥
ततः क्रीडाद्रिमारुह्य तमायान्तं नभश्चरम् ।
दिदृक्षुः स क्षणं तस्थौ यथाऽर्क्के लग्नसाधकः ॥१५॥
अनागते च गन्धर्वे किञ्चिन्म्लानमुखाम्बुजः ।
अवातरद् गिरेस्तस्मादन्तरिक्षाच्च भास्करः ॥१६॥
आगत्य सदने सायं शयने विनिविश्य सः ।
दध्यौ विद्याधराधीशसुतातन्मयमानसः ॥१७॥
तामेवादर्शयत् तस्य लिखितां दिक्षु सर्वतः ।
खर्वयन्निव गन्धर्वगर्वं पञ्चेषुचित्रकृत् ॥१८॥
इत्थं साऽपि ययौ तस्य कुमारस्य निशीथिनी ।
तथैवोद्यानमन्येद्युरपि सोऽगच्छदुत्सुकः ॥१९॥
इत्यस्य दिवसा यान्तोऽनायाते तत्र खेचरे ।
सङ्गमाशां कृशीचक्रुश्चक्रसेनासुतां प्रति ॥२०॥
प्रथितां ग्रीष्मकामाभ्यामथाऽस्य दवथुव्यथाम् ।
अपाकर्तुमिव प्रावृट् प्रावृणोद् गगनं घनैः ॥२१॥
ग्रीष्मान्ते च शतः शीतोपचारे विरते सति ।
सा गोपितेङ्गितस्यास्य सन्तापं प्रत्युतातनोत् ॥२२॥
ततः पयोधरोत्सेधवत्यां तरितया तया ।
तुल्यार्चिरिव तस्याथ शरत्कालः समागमम् ॥२३॥
ततस्तिलकमञ्जर्याः सन्ततस्मृतिजन्मना ।
आधिना बाधितः सौधे कुमारः स्थातुमक्षमः ॥२४॥
आपृच्छ्य तातमुद्दिश्य देशदर्शनकौतुकम् ।
मित्रैः समेतः साकेतनगरान्निरगादसौ ॥२५॥ युग्मम् ।
तं प्रयान्तमविश्रान्तं प्रतिदेशं तदीश्वराः ।
उपेत्यानुपदं प्रीताः प्रणम्यानुप्रतस्थिरे ॥२६॥
व्यतीतकामरूपोऽपि कामरूपान् जगाम सः ।
प्राग्ज्योतिषपतिप्रीत्या सैन्यं तत्र न्यवेशयत् ॥२७॥

---

१ चि । २ य । ३ म । ४ सी । ५ उपदा ।

विजह्वारान्वहं चायमायल्लकक्रतव्यथः ।
अनाप्तसैन्यसौहित्यलौहित्योपा[न्]तकानने ॥२८॥
एकदा प्रातरायातं तत्र सालतलस्थितम् ।
वीणाविनोदलीनं तं गजाध्यक्षो व्यजीज्ञपत् ॥२९॥
अद्य क्षेपान्ते वन्येभमदगन्धप्रबोधितः ।
प्रविवेश वनं वैरियमदण्डाभिधो गजः ॥३०॥
न पार्यते स चानेतुं हस्त्यारोहैरनुद्रुतैः ।
द्रुतमादिश्यतां तेन कोऽपि साधनिकोऽधुना ॥३१॥
तन्निशम्य कुमारोऽपि समारोहत् तुरङ्गमम् ।
मुक्त्वा कमलगुप्तं च सैन्ये तद्वनमव्रजत् ॥३२॥
सोऽपश्यदवशं तत्र सिन्धुरं तं मदोद्धुरम् ।
ऊर्ध्वीकृतकरोच्चण्डमुग्रदण्डमिवान्तकम् ॥३३॥
वार्यमाणोऽप्ययं वारंवारं समरकेतुना ।
निकुञ्जं कुञ्जरासन्नमुत्तीर्य तुरगादगात् ॥३४॥
लतावृतः पृथक्कृतन्त्रीस्थानमित्रीकृताङ्गुलिः ।
वीणामवादयत् तत्र व्यञ्जितग्राममूर्च्छनम् ॥३५॥
आकर्ण्य स्तब्धकर्णोऽस्याः क्वणितं कूणितेक्षणः ।
द्विपः सुप्त इव श्रान्त इवोत्कीर्ण इवाभवत् ॥३६॥
तं चैवमचलं मत्वा विगलन्मदनिर्झरम् ।
दन्तदत्ताङ्घ्रिरारोहत् कुमारो हस्तिनं ततः ॥३७॥
त्याजितः सुखनिद्रां तां तेनोच्चैः स्कन्धबन्धुना ।
उदन्मार्गमगात् कुम्भीकुम्भकर्ण इवाहवम् ॥३८॥
अङ्कुशोऽङ्कुश इत्येवं व्याहारं हारिवाँहनम् ।
निशम्य साङ्कुशाः पृष्ठे प्रतीहाराः प्रतस्थिरे ॥३९॥
एष यात्येष याति द्रागितो गत इतो गतः ।
इत्युदस्तैकहस्तैस्तैर्दर्श्यमानस्तिरोदधे ॥४०॥
ततः समरकेतुस्तं गजं नीतनृपाङ्गजम् ।
महाजवव्रजद्वाहै राजन्यैः सममन्वगात् ॥४१॥

१ क्षि । २ रा । ३ ज । ४ वो । ५ ष्टे ।

दानधारानुसारेण सुदूरमनुगम्य तम् ।
खिन्नाश्वः सायमावासं विदधे सिन्धुरोधसि ॥४२॥
मित्रे विमृशतस्तानि तान्यनिष्टानि सा निशा ।
तस्याधिना सह स्पर्द्धां दधतीवाभवद् गुरु ॥४३॥
प्रातः प्रतिदिशं पत्तीनादिश्य सुहृदीक्षणे ।
वर्त्मद्रुमतले पान्थान् स पृच्छन्ननयद् दिनम् ॥४४॥
तं दिने श्वस्तने सायमायाताः पत्तयोऽवदन् ।
दृष्टो दुष्टगजोऽस्माभिः स जगत्तिलकस्तु न ॥४५॥
निशम्य तेषां साश्राणां वज्रपातसमं वचः ।
सिंहलेन्द्रसुतः सिंहसत्त्वोऽपि विललाप सः ॥४६॥
हा कुमार ! कुलाधार ! हा विद्वन् ! हा सुहृत्प्रिय ! ।
कुत्रासि दर्शनं मित्र ! देहि मे हरिवाहन ! ॥४७॥
एवं स विलपन्नेव सहसा मोहमागमत् ।
अत्रान्तरे नरेन्द्राणां वृन्दमाक्रन्दमादधे ॥४८॥
मोहान्ते सिंहलाधीशसुतश्चैतदचिन्तयत् ।
भ्रातर्जातो विसंवादस्तासां लक्ष्मीगिरामपि ॥४९॥
प्रभावोऽपि गतश्चक्रवर्त्तिलक्षणलग्नकः ।
यत् त्वमप्यापदं प्राप तस्मात् करिटिकीटतः ॥५०॥
यद्वा सर्वं ममाभाग्यमकरोदिति रोदिति ।
एवं विद्राणनिद्रस्य जगामैतस्य यामिनी ॥५१॥
यान्ति नान्तरिताः कालात् पुनर्नेत्रपथं कथम् ? ।
इतीवोर्ध्वकरः शंसद्रविराविरभूत् पुरः ॥५२॥
प्रातश्चिताप्रवेशाय मित्रानुगमनोत्सुकः ।
चचालायमथागत्य व्याहरल्लेखहारकः ॥५३॥
इमं कमलगुप्तेन कुमारे क्षेमसाक्षिणम् ।
समर्प्य प्रहितोऽस्मीति तत्पुरो लेखमक्षिपत् ॥५४॥
अग्रहीदङ्गराजस्तमानन्दमिव देहिनम् ।
वाचयित्वा च पप्रच्छ केनानीतोऽयमित्यमुम् ॥५५॥

---
१ स्व ।

स चालपत् कुमारापहारवार्त्ताश्रुतेः शुचा ।
नताननेन सेनान्या क्षितौ लेखोऽयमीक्षितः ॥५६॥

विस्मतः स तमादाय कस्यायमिति चिन्तयन् ।
कुमारनाम तत्पृष्ठे दृष्ट्वा स्वयमवाचयत् ॥५७॥

स्वस्त्यटव्या महाराजतनयो हरिवाहनः ।
कल्याणशाली लौहित्यकूलान्ताद् वासिते बले ॥५८॥

अङ्गाधिराजं समरकेतुं प्रीतिपुरःसरम् ।
तथा कमलगुप्तादिराजन्यानादिशत्यदः ॥५९॥

दिनानि कतिचित् तावदत्रैव स्थीयतां यथा ।
ममापहारवार्त्तां न जानीतः पितराविति ॥६०॥

संवृत्य तं चमूनेता तदानेतारमैक्षत ।
तमपश्यन् विमृश्याथ प्रतिलेखं तदाऽलिखत् ॥६१॥

मुक्त्वा चैतं क्षितावूचे सुरो वा खेचरोऽथ वा ।
यः कश्चिदानयल्लेखं तेनायमपि नीयताम् ॥६२॥

एवमुक्ते शुकः कश्चिदुत्तीर्य सहकारतः ।
चञ्च्वा गृहीत्वा तं लेखमुदीच्यामगमद् दिशि ॥६३॥

सविस्मयः क्षणं स्थित्वा सेनानी प्राहिणोन्मया ।
सहसा साहसाशङ्की लेखमेतं तवान्तिके ॥६४॥

इत्युक्ते परितोष्यैनमङ्गराजः सराजकः ।
वासरत्रितयात् कृत्वा भोजनं शयने ययौ ॥६५॥

धातुद्रवाक्षरैस्ताडीपत्रे स्वर्णावचूर्णितम् ।
विभाव्य भूयस्तं लेखं स चकारेति चेतसि ॥६६॥

कुमारः क्वापि दिव्येऽस्ति प्रदेशे न तु शंसितः ।
नामतोऽसौ ममानेनानुपातक्लेशभीरुणा ॥६७॥

अहो ! मोहान्न विज्ञातं देशे यदविशेषिते ।
अटवीः पर्यटन्नेष विशेषक्लेशमेष्यति ॥६८॥

---

१ ष्टे । २ ष्ये ।

अन्वेषयाम्यमुं हित्वा वैदिहीमिव वाहिनीम् ।
मृगाधमहृतं मित्रं सौमित्रिरिव राघवम् ॥६९॥
अथो निशीथे कान्तारं प्रतस्थे सिन्धुराध्वना ।
उल्लासितासिलाङ्गूलः सिंहः सिंहलभूपभूः ॥७०॥
आवैताढ्यगिरेर्गाढं मित्रमन्वेष्टुमुद्यतः ।
स चक्रामाटवीं भीमां फलाहारो गुहाशयः ॥७१॥
मार्गे मित्रवरो नाम कामरूपाधिपानुजः ।
तं विलोक्यालपद् यूयमित्थमेकाकिनः कथम् ॥७२॥
विजने युवराजोऽपि छलान्तं सर्वमभ्यधात् ।
कृतोपचारस्तेनाथ पुनर्गन्तुं प्रचक्रमे ॥७३॥
अथानेकगिरिग्रामपुरपल्लीर्विलङ्घयन् ।
षड्भिर्मासैर्महाशैलमेकशृङ्गं जगाम सः ॥७४॥
मज्जद्विद्याधरीवक्त्रवर्द्धिष्णुकनकाम्बुजम् ।
ददर्शादृष्टपाराख्यं तत्पृष्ठे[2] स महासरः ॥७५॥
ग्रीष्मे भीष्मातपक्लान्तः स्नात्वा स नरकुञ्जरः ।
पयस्तत्र पपौ वक्त्रसञ्चरत्करपुष्करः ॥७६॥
अथास्य तीरवानीरमन्दिरे पत्रसंस्तरे ।
स्थितस्यारब्धनर्मैव निद्रा नेत्रे न्यमीलयत् ॥७७॥
पारिजातमसौ स्वप्नेऽपश्यत् कुसुममांसलम् ।
वाञ्छितालिङ्गनं कल्पलतया ललिताङ्गया ॥७८॥
प्रबुद्धश्चाचिराद् भावि सुहृदः स्मेरसम्पदः ।
दर्शनं निर्णयन्नेष हेषारवमथाशृणोत् ॥७९॥
ससम्भ्रमः स निर्गत्य सर्वतश्चक्षुरक्षिपत् ।
तीरे तरुचितेऽश्वीयमपश्यन्नित्यचिन्तयत् ॥८०॥
तीरं सकलमालोके यदि वा किमनेन मे ।
करोम्यारब्धमेवार्थमिति भूयोऽभवत् पथि ॥८१॥
दक्षिणेन क्षणे तत्र स्पन्दमानेन बाहुना ।
कृतोत्साहः पथि क्रामन्नारामं दिव्यमैक्षत ॥८२॥

---

१ क । २ ष्टे ।

अतर्कयच्च नो कस्य प्रीतिं पल्लवयत्ययम् ।
भेजेऽनपेक्षितानेहाः[1] स्नेहाद्दत्तगुणोऽपि यम् ॥८३॥
ददृशे रत्नरोचिष्णु तदन्तःसञ्चरिष्णुना ।
कल्पद्रुमण्डलं तेन वनश्रीकुण्डलोपमम् ॥८४॥
तन्मध्ये मध्यमाणिक्यमिवोन्नतिविवर्जितम् ।
ददर्श देवतासद्म पद्मरागमयं ततः ॥८५॥
तद् वीक्ष्याद्भुतनिर्माणं पुण्यकर्म्माणमुद्यमी ।
आत्मानं मन्यमानोऽसौ तदभ्यन्तरमभ्यगात् ॥८६॥
सविस्मयस्ततोऽपश्यदंसविश्रंसिकुन्तलाम् ।
श्रीमन्नाभेयनाथस्य प्रतिमां मणिसम्भवाम्[2] ॥८७॥
अमन्दानन्दबाष्पाम्बुसंसेकादिव साङ्कुराम् ।
भक्तिं रोमाञ्चलक्ष्येण बिभ्राणः प्राणमच्च ताम् ॥८८॥
तुष्टावाथ "जगन्नाथ ! संसारक्षारवारिधौ ।
ऋते त्वद्दर्शनादन्यदमृतप्रदनामृतम् ॥८९॥
अस्मादेव यतो देव ! सङ्कल्पितफलप्रदः ।
पुण्यकल्पद्रुमः प्राणिसन्दोहस्य प्ररोहति" ॥९०॥
स्तुत्वेति चक्षुराक्षिप्य कथञ्चित् तीर्थकृन्मुखात् ।
चैत्यस्यालोकयद् गर्भहर्म्यान्निःक्रम्य रम्यताम् ॥९१॥
गवाक्षे दक्षिणे वीक्ष्य प्रशस्तिं विशदाक्षराम् ।
अचिन्तयच्च केनेदं कारितं जिनमन्दिरम् ॥९२॥
अपि प्रशस्तावेतस्यामेतस्यार्थस्य सूचकः ।
लिपिभ्योऽष्टादशभ्योऽपि कोऽपि वर्णक्रमोऽपरः ॥९३॥
शक्यस्तर्कयितुं नायं यदि वा किमनेन मे ।
ज्ञात्वाऽपि कथयिष्यामि कस्याग्रे सुहृदं विना ॥९४॥
एवं विमृशतस्तस्यामृतस्यन्द इवाविशत् ।
किञ्चिद्व्यक्तीभवद्वर्ण्णः कर्ण्णयोरध्वनि[3] ध्वनिः ॥९५॥
अचिन्तयत् तपःश्लोक इव केनापि पठ्यते ।
मित्रनामांङ्कितः सोऽपि श्रूयते बत ! किं न्विदम् ॥९६॥

१ At an unusual time. । २ मणिमयीमवाम् । ३ ध्वि ।

इत्यौत्सुक्यादनुध्यानं धावन् पक्षे स दक्षिणे ।
रत्नांशुभिर्नभश्चित्रकर्मठं मठमैक्षत ॥९७॥
उत्तरं तं ततोऽपश्यद् दिव्याभरणभूषितम् ।
गन्धर्वकमधीयानं सानन्दं श्लोकमीदृशम् ॥९८॥
"खेचरीलोचनानन्द ! भारतान्वयभूषण ! ।
हरिवाहन ! कल्पान्तं वह धीरोचितां धुरम्" ॥९९॥
चिराय प्रत्यभिज्ञाय तेनापि प्रणतस्ततः ।
अङ्गराजस्तमप्राक्षीद् गवाक्षमुपवेशितः ॥१००॥
भ्रातस्त्वं प्रातरेष्यामीत्यालप्य हरिवाहनम् ।
गतस्तदा कुतो हेतोरियत्कालं विलम्बितः ॥१०१॥
कस्येदमद्भुतं चैत्यं कस्तिष्ठति मठोपरि ।
किञ्चिद् येन सहालप्य सहर्षस्त्वमवातरः ॥१०२॥
गन्धर्वकोऽभ्यधाद् गुर्वी तावदास्तामियं कथा ।
क्रमेण सर्वं ज्ञाताऽसि प्रतिष्ठस्वाधुना पुनः ॥१०३॥
पश्य सिद्धमहाविद्यमचैवोद्यानमागतम् ।
प्राप्तविद्याधरैश्वर्यं भ्रातरं हरिवाहनम् ॥१०४॥
उत्थायाथ सहर्षोऽङ्गराजोऽपि जगतीगताः ।
प्रतिमाः प्राणमञ्जैनीर्नानारत्नविनिर्मिताः ॥१०५॥
गच्छन् गन्धर्वकादिष्टवर्त्मना वाजिनां व्रजम् ।
वीक्ष्य व्यमृशदश्रौषमेषां हेषारवं तदा ॥१०६॥
अथाऽस्यानन्दयन् कर्णौ गतेर्ध्वनिरथेक्षणैः[:] ।
अश्मगर्भगृहं रम्भागृहं किल तदीक्षया ॥१०७॥
तत्रापश्यदसौ स्वर्णपट्टबन्धेन बन्धुरम् ।
वारनारीकल्लोल्लासलीलाललितचामरम् ॥१०८॥
तल्पे शयितयाऽनल्पपद्मिनीपत्रकल्पिते ।
संवीज्यमानया शश्वदालीभिः कदलीदलैः ॥१०९॥
नवयौवनया रूपनिर्धूतरतिगर्वया ।
राजन्यकन्यया साकं जल्पन्तं हरिवाहनम् ॥११०॥

१. च्च । २. ने । ३ ष्ट्या । ४ र्षा । ५ गं । ६ स्म ।

"सहृद् देव ! तवायातः" इति गान्धर्विकीं गिरम् ।
श्रुत्वाऽऽसनादथोत्तस्थौ सहर्षं हरिवाहनः ॥१११॥
सद्योऽभिषेकनिर्माणनिर्मलाङ्गविषङ्गिणा ।
वनानिलचलद्वल्लीपरागेणाङ्गरागिणम् ॥११२॥
क्लृप्तकल्पलतापट्टबन्धमौलिमनोहरम् ।
सदृक्षमात्मनोऽद्राक्षीच्चन्द्रकेतुसुतं पुरः ॥११३॥
अनभ्रवृष्टिकल्पेन तेन तद्दर्शनेन सः ।
उल्लसत्पुलकाङ्कूरो दूरात् प्रत्युद्ययौ ततः ॥११४॥
पादानतं तमुत्थाप्य सादरं सुहृदं हृदि ।
प्रवेशयन्निवालिङ्ग्य विष्टरार्द्धे न्यवेशयत् ॥११५॥
ऊचेऽथ राजपुत्रीं तां "देवि ! सिंहलशासितुः ।
चन्द्रकेतोर्नरेन्द्रस्य[1] सूनुरन्यूनविक्रमः ॥११६॥
वरो मलयसुन्दर्यास्त्वद्भगिन्याः स्वयंवृतः ।
अयं समरकेतुः स द्वितीयं हृदयं मम ॥११७॥
यदागमनसम्भ्रान्तचित्तेनान्तरितो मया ।
पुण्यप्राप्यस्तवाप्यास्यचन्द्रालोकक्षणः क्षणम्" ॥११८॥
इत्युक्ते प्रणता तेन सादरं तत्र देव्यपि ।
नेत्राञ्चलं वितेनेऽत्रान्तरे वेत्रायुधोऽभ्यधात् ॥११९॥
"द्वारेऽस्ति कञ्चुकी देव्या प्रेषितः पत्रलेखया ।
सातङ्कया तवाकर्ण्य प्राणत्यागस्पृहाम्" इति ॥१२०॥
मुखन्यस्तेक्षणा स्थित्वा क्षणमप्राप्य चोत्तरम् ।
गता साऽथ जगौ कश्चिदार्यामेतां सरःस्थितः ॥१२१॥
"तव राजहंस ! हंसोदर्शनमुदितस्य विस्मृतो नूनम् ।
सरसिजवनप्रवेशः समयेऽपि विलम्बसे तेन" ॥१२२॥[2]
श्रुत्वा कुमारस्तामूचे "देवि ! हंसापदेशतः ।
लग्नं मम प्रवेशाय विद्याधरपुरेऽधुना ॥१२३॥

१ नी । २ Borrowed from the original prose of Kavi Dhanapal.

विराधनामैको[1] नर्मसचिवः सूचयत्ययम् ।
तद् वयं तत्र गच्छामः पश्य त्वमपि मातरम्" ॥१२४॥
इत्थं कथञ्चिदापृच्छ्य परिच्छदपरिष्कृतः[2] ।
विष्टराद् विष्टपानन्दिवन्दिघोषैः सहोत्थितः ॥१२५॥
सह सिंघलभूपालसुतेनारुह्य हस्तिनीम् ।
स क्षणादन्तरिक्षेण सञ्चैरत्खेचरेश्वरः ॥१२६॥
पश्यन् विद्याधरैर्विद्यासिद्धयेऽध्युषितद्रुमाम् ।
अन्तरालाटवीमेकश्टङ्गाद् वैताढ्यमागमत् ॥१२७॥
तत्र तन्वानमाह्वानमिवोद्भूतध्वजांशुकैः ।
पुरमापोत्तरश्रेणिमौलिं गगनवल्लभम् ॥१२८॥
सोपेन्द्रो[ऽयं] किमिन्द्रः किमु सह मधुना मूर्त्तिमानेष कामः
किं वा रामः सुमित्रासुतसहित इति भ्रान्तिसंक्रान्तिभाजा ।
पौरस्त्रैणेन कौतूहलतरलदृशा लास्यलीलाश्रितेन
प्राविक्षत् प्रेक्ष्यमाणः सममथ सुहृदा राजसौधं स धीरः ॥१२९॥

**[इति श्रीतिलकमञ्जरीसारे] पुरप्रवेशो नाम चतुर्थो विश्रामः ॥**

**[ इति चतुर्थं प्र कम ]**

---

१ मे । २ स्कृ । ३ रे ।

## अथ पञ्चमं प्रयाणकम् ।

ऊरुसन्दंशदष्टाधोवस्त्रस्तत्रास्य मङ्गलम् ।
तनुस्तननिरालम्बहारा वाराङ्गनास्ततः ॥१॥
स्नातेन सुहृदा दिव्यवस्त्रालङ्कारधारिणा ।
अन्यैश्च खेचरैः साकमाहारमकरोदसौ ॥२॥
विधायाथ विधिं[1] सान्ध्यमध्यास्यालेख्यशालिकाम् ।
मित्रान्मार्गागमोदन्तं पृष्ट्वा सुष्वाप स क्षणम् ॥३॥
प्रातरुत्थाय वैताढ्यमारूढः प्रौढकौतुकः ।
पश्यतोऽस्य तदुद्देशानिदं बन्दी पुरोऽपठत् ॥४॥
"क्रान्तस्य खेचरैर्दृश्यं तुल्यान्यक्ष्माभृतोऽस्य किम् ।
देव ! दृश्योऽसमः क्ष्माभृत् त्वमेवाक्रान्तखेचरः" ॥५॥
व्याजहाराङ्गराजोऽथ "सखे ! साध्वयमभ्यधात् ।
को हि नामात्र दोर्मात्रसहायः स्वल्पवासरैः ॥६॥
अन्यो निन्ये वशं विद्यां[2] विद्याधरकुलानि च ।
तदाख्याहि तदा व्यालः स त्वां हृत्वा गतः कुतः ॥७॥
कुतः स प्रेषितो लेखः कथं[4] विद्याः प्रसाधिताः ।
का वा सर्वाङ्गललिताकारा सा राजकन्यका" ॥८॥ कुलकम् ।
इति हृष्टसुहृत्पृष्टः प्राह स्म हरिवाहनः ।
"अवधाने धियं बन्धो ! बधानाभिदधेऽधुना ॥९॥
मयाऽऽरूढे जवाद् गत्वा त्वत्समक्षं समक्षमाम् ।
व्योमोत्पपात पक्षीव स क्षीबकरटी क्षणात् ॥१०॥
पश्यन्नुच्चैर्गते तस्मिन्नश्मतुल्यकुलाचलाम् ।
कुल्यातुल्यापगां दूर्वाखर्वाकारवनां भुवम् ॥११॥
समीपार्कांशुसम्पर्कात् ताप्यमानतनुः क्वचित् ।
क्वचिदम्बुमुचां चक्रैः कल्पितातपवारणः ॥१२॥
सिद्धाङ्गनाभिः सातङ्कं मुच्यमानपथः क्वचित् ।
एकशृङ्गशिरश्छत्रं नभसो भागमागतः ॥१३॥

१ धि । २ ध्य । ३ द्या । ४ कं । ५ पा ।

नूनं केनापि दिव्येन सिन्धुरोऽयमधिष्ठितः ।
भूमिद्विपानामाकाशगमनं कथमन्यथा ॥१४॥
तद् याति नातिदूरेऽसौ यावत् तावन्निवर्त्तये ।
कृत्वेति चेतसि क्षिप्रं क्षुरिकामुदखानिषम् ॥१५॥
विलोक्याशनिकल्पां तां ममज्ज स गजः क्षणात् ।
अदृष्टपारे सरसि मैनाक इव सागरे ॥१६॥
तिरोहिते च तत्राऽहं गाहमानो महासरः ।
तीरमासादयन् नीरान्निःक्रम्येति व्यचिन्तयम् ॥१७॥
अहो ! संसारवैचित्र्यं यदाऽऽसं सैन्यसंयुतः ।
अथैवाहं सहायातहस्तिनाऽपि विनाकृतः ॥१८॥
विभाव्येति निराशश्च निजदेशस्य दर्शने ।
यामादि वीक्षितुं काष्ठां स्वीकृत्यैकामथाऽचलम् ॥१९॥
सुव्यक्ताः सैकते स्वल्पप्रमितीर्ललिताकृतीः ।
आलोकयामि स्म पदश्रेणीरेणीदृशां पुरः ॥२०॥
तासु चैकां निरीक्ष्याहं शुभलक्षणसाक्षिणीम् ।
अनुव्रजन्नथाऽपश्यमेकमेलालतागृहम् ॥२१॥
दृष्ट्वा तद् द्रुतहेमाभप्रभासम्भारपूरितम् ।
द्वारि विस्मयमानोऽहमस्थामन्तरमानिव ॥२२॥
क्षिप्तचक्षुरथ ज्योतिःपरागपरिवेषिताम् ।
पादसंवादिताम्भोजां रम्भारम्योरुविभ्रमाम् ॥२३॥
दूर्वासवर्णरोमालिं स्तनस्तबकबन्धुराम् ।
लतासजातीयभुजां बन्धूकमधुराधराम् ॥२४॥
नीलोत्पलसपत्नाक्षीं साक्षादिव वनश्रियम् ।
पुष्पावचायिनीं बालामालोक्यैकामतर्क्कयम् ॥२५॥ कुलकम् ।
दिवाऽपि व्यापि तन्वाना महः काऽपि महौषधी ।
अनङ्गोज्जीवनायाऽसौ विदधे वेधसा ध्रुवम् ॥२६॥
साऽपि मद्दृष्टिनिक्षेपवेपमानवपुर्लता ।
उद्भ्रान्तभ्रमरश्रेणिकल्पा व्यापारयद् दृशः ॥२७॥

१ ष्या ।

ततस्तामभ्यधां भीरु ! का त्वमेकाकिनी वने ।
मा स्म भैर्नास्मि दैत्यादिरिह त्वां हर्तुमागतः ॥२८॥
भूगोचरोऽहमारोहत् कीर्त्तेरात्रिदशालयम् ।
मेघवाहनभूभर्तुर्नन्दनो हरिवाहनः ॥२९॥
वीणावशीकृतं व्यालमारूढोऽथ प्रविश्य तम् ।
हृतः केनाप्यनाप्तेन क्षिप्तश्चात्र सरोवरे ॥३०॥
तीर्णस्ततः पदश्रेणीमनुगच्छन्निहागमम् ।
त्वदालोकाच्च लोलाक्षि ! लब्धं लोचनयोः फलम् ॥३१॥
साम्प्रतं यातुमिच्छामि पृच्छामि त्वामिदं पुनः ।
कोऽयं गिरिः सरः कस्य को देशः कोऽस्य शासिता ॥३२॥
इत्युक्ता सा गतातङ्का क्षणं स्थित्वा नताननम् ।
अदत्त्वैवोत्तरं बाला चचालाभिमुखं मम ॥३३॥
निर्गन्तुकामा वामाङ्गपक्षस्था चाक्षिपन्मयि ।
मोहाह्लादकरं चक्षुर्विषमिश्रमिवामृतम् ॥३४॥
किञ्चिद्दत्तावकाशा च मया ज्ञाताशयेन सा ।
अङ्गेनाङ्गं स्पृशन्ती मे द्वारि तिर्यग् विनिर्ययौ ॥३५॥
नितम्बमुत्तरीयेण स्वेदसंदष्टवाससम् ।
प्रावृण्वती व्यतीयाय ममाऽसौ दृक्पथं क्रमात् ॥३६॥
प्रस्थितोऽहं ततो हन्त ! वाङ्मात्रेणापि नैतया ।
सम्भावित इति क्लिष्टमनास्तस्यामनादरः ॥३७॥
स्वदेशदिशि लग्नोऽहमिदं वनमिदं सरः ।
कन्याऽप्येषा पटालेख्यसन्निभेति व्यभावयम् ॥३८॥
तां प्रेमसौरभाकृष्टो व्याघुट्यालीव मालतीम् ।
अन्वेष्टुमभ्रमं व्यर्थयत्नश्चाभ्यसरं सरः ॥३९॥
धौतांह्रिश्च विधिं सान्ध्यं विधायास्वादयं मृदु ।
नलिनीकन्दलीः काश्चिदपां च प्रसृतीरपाम् ॥४०॥
प्रियासंसर्गसुभगे तस्मिन्नेलालतागृहे ।
पल्लवैः कल्पितां शय्यामधिशय्येत्यचिन्तयम् ॥४१॥

---

१ त्वा ।

अहो ! मोहात् प्रकम्पादीन् भावांस्तान् सात्त्विकानपि ।
त्रासरूपान् प्रकल्प्यासौ जल्पिता न मुहुर्मया ॥४२॥
कृतस्थितिः क्षणं द्वारि धारिता न कराम्बुजे ।
इत्याद्यनुशयानस्य सा शशामे निशा मम ॥४३॥
प्रातः पुनस्तामन्विष्यन्नुत्तरं तीरमागतः ।
आर्द्रामैक्षे पदश्रेणीं वेणीमिव सरःश्रियः ॥४४॥
अनुव्रजंस्तामद्राक्षं पद्मरागमयं पुरः ।
सुरसद्म यदुद्यानं त्वत्सङ्गमफलप्रदम् ॥४५॥
कृत्वा देवनमस्कारमारूढो मत्तवारणम् ।
पुनर्दिदृक्षयेवाहं तस्या एव मृगीदृशः ॥४६॥
अथ रूपवयःकान्तिगुणैस्तस्यां सहोदराम् ।
मन्दमोष्ठपुटस्पन्दलक्ष्मन्त्राक्षरोदयम् ॥४७॥
धृताक्षमालिकां ध्यानमुद्रामुकुलितेक्षणाम् ।
सद्यःस्नानार्द्रकेशालिं दिव्यवल्कलवाससम् ॥४८॥
पुरो नाभितनूजस्य कृतपूजस्य पङ्कजैः ।
बद्धपद्मासनामेकामैक्षे तापसकन्यकाम् ॥४९॥ कुलकम् ।
साऽथ ध्यानविधेरन्ते परिचारिकयाऽन्विता ।
सम्पूज्य जगतीबिम्बश्रेणिं मम पुरोऽभवत् ॥५०॥
अभ्यधाच्च महाभाग ! भाग्यैः प्राप्तोऽसि मादृशाम् ।
तत् पुनीहि जनस्याऽस्य वसतिं वनवासिनः ॥५१॥
इत्युक्ते तां प्रणम्याहमनुगच्छन् गतो मठम् ।
तत्रातिथ्ये कृते पृष्टस्तया वृत्तान्तमभ्यधाम् ॥५२॥
अथ मध्याह्नकृत्याय मामाहूय सहैव सा ।
अयासीत् सरसीं तस्यामावश्यकविधिं व्याधात् ॥५३॥
देवार्चनान्ते दिव्यानि भोजयित्वा फलानि माम् ।
कृताहाराऽवशिष्टैस्तैरुपविष्टा पुरो मम ॥५४॥
दर्शितोदारसौहार्दा तां सखेदमवादिषम् ।
शंस श्रयसि कं वंशमभिधानपदं च किम् ? ॥५५॥

---

१ शसोम । २ ष्ट । ३ क ।

कश्चक्रे वल्कलाधीनां तनुं चीनांशुकोचिताम् ? ।
न ते[1] वयसि विद्वेषः किमेष विषयेषु ते ? ॥५६॥

तस्या मयैवमुक्ताया गलिताश्रुकणावलिः ।
प्राग्दशां दर्शयन्तीव[2] हारश्रियमशिश्रियत् ॥५७॥

मदर्पिताम्बुधौताक्षी सा जगाद सगद्गदम् ।
श्रूयतां मे महाभाग ! प्रागवस्था व्यथामयी ॥५८॥

अस्ति काञ्चीति काञ्चीव पृथिव्याः प्रथिता पुरी ।
तस्यां तेजोनिधिर्भूपरत्नं कुसुमशेखरः ॥५९॥

तस्य गन्धर्वदत्तेति देवी प्रेमैकमन्दिरम् ।
दत्तदुःखातिरेकाहं तयोरेका तनूद्भवा ॥६०॥

आदिष्टं वसुरातेन ज्ञानिना मम जन्मनि ।
पुण्यपात्रमियं कन्या यश्चैनां परिणेष्यति ॥६१॥

चक्रिणा न्यस्तराज्यश्रीः स प्रभुत्वं करिष्यति ।
हृष्टस्ततोऽथ मां चक्रे नाम्ना मलयसुन्दरीम् ॥६२॥

वर्द्धमाना कलाभ्यासपरा लेखेव वैधर्वी[3] ।
क्रमादहं स्मरोन्मादपदं यौवनमासदम् ॥६३॥

निद्राणा चन्द्रशालायामेकदा क्षणदामुखे ।
अकस्मादस्मि दिव्येन नान्दीनादेन वोधिता ॥६४॥

उन्निद्रचक्षुरद्राक्षमात्मानमतिविस्मिता ।
कोणैकदेशे माणिक्यनिर्माणस्य जिनौकसः ॥६५॥

पार्श्वे च रुचिराः कन्याः काश्चिदत्यानतोन्मुखीः[4] ।
हस्तन्यस्तमुखीः काश्चित् काश्चित् कौतूहलाकुलाः ॥६६॥

[च]किताऽचिन्तयं चाहमहो ! किमिदमद्भुतम् ।
स्वप्नः किमिन्द्रजालं किमिन्द्रियाणां भ्रमो नु किम् ? ॥६७॥

---

१ ने। २ च। ३ The choice of this word is rather unhappy due to its similarity with the derivative from the word 'Vidhavā'. ४ नो।

मन्दमन्दमथोत्थाय विहाय सहजं भयम् ।
आगमं नरनारीभिर्मण्डितं मणिमण्डपम् ॥६८॥
तत्रार्ये ! कः प्रदेशोऽयं केऽमी रम्यौजसो नराः ।
मध्ये चैषां नृपः कोऽयमित्येकामालपं स्त्रियम् ॥६९॥
सा चाख्यत् पञ्चशैलाख्यः पुत्रि ! द्वीपोऽयमर्णवे ।
वैताढ्यवासिनः प्रौढविद्याविद्याधरा अमी ॥७०॥
विचित्रवीर्यनामाऽयं विख्यातः खेचरेश्वरः ।
अत्रान्तरे नरेशं तं वेत्रपाणिर्व्यजिज्ञपत् ॥७१॥
देव ! प्रतापशीलस्य कुशस्थलपतेरियम् ।
कन्या कान्तिजितश्यामाकुसुमा कुसुमावली ॥७२॥
ह्रेपयन्ती रुचा विद्याधरीर्मलयसुन्दरी ।
सेयं यस्याः पिता काञ्चीपतिः कुसुमशेखरः ॥७३॥
गौराङ्गी मगधेशस्य सूरकेतोरियं सुता ।
शकुन्तला [कला]धामविधोर्मूर्त्तिरिवापरा ॥७४॥
असौ सौराष्ट्रराजस्य बन्धुमत्यभिधा सुता ।
श्यामाङ्गी मदलेखेव मत्तवारणमाश्रिता ॥७५॥
एताश्च वेदिं नेदिष्टामारूढा प्रौढकान्तयः ।
कन्याः कलिङ्गवङ्गाङ्गकोशलादिमहीभृताम् ॥७६॥
लीलावती तथा चन्द्रलेखा मालतिका तथा ।
अनङ्गलेखा चेत्यादिनामभिः ख्यातिमागताः ॥७७॥
अथ ताः क्षितिभृद् वीक्ष्यादिक्षदेकां विलासिनीम् ।
विचित्रैर्मण्डनैरेताश्चित्रलेखे ! प्रसाधय ॥७८॥
प्रसादय च वाक्यैः स्वैर्यथा नृत्तं वितन्वते ।
यात्रायामत्र वित्रासमपहायापहारजम् ॥७९॥
तया कृते यथादिष्टे विष्टपैकगुरोरथ ।
स्नात्रं भक्तिपरैः पुंभिः कुम्भैरारम्भि काञ्चनैः ॥८०॥
स्नात्रान्ते समुपक्रान्ते सङ्गीते ननृतुः क्रमात् ।
कन्यास्ता अथ नृत्ताऽहं साकं प्रेक्षकमानसैः ॥८१॥

रङ्गाङ्गणं प्रणम्याथ चित्रलेखामुपायतीम् ।
आहूय स्वासनान्ते मां खेचरेशो न्यवेशयत् ॥८२॥
वक्त्रं मम त्रपानम्रमुन्नमय्य जगाद च ।
वत्से[1] ! त्वमीदृशं नाट्यममनः क्व मनोहरम् ॥८३॥
क्षोणिदत्तेक्षणा तस्य निर्बन्धादभ्यधामहम् ।
अभ्यासस्तात ! नाभ्यासे गुरोरेकस्य कस्यचित् ॥८४॥
परं मयि समक्रामच्चातुरी मातुरीदृशी ।
वत्से ! कुतस्तयाऽभ्यस्ता तात ! खेचरलोकतः ॥८५॥
वत्से ! नाम सवित्री ते पवित्रयति किं वद ।
तात ! गन्धर्वदत्तेति श्रुत्वेति सचिवोऽब्रवीत् ॥८६॥
देव ! कच्चिन्न सा पुत्री देवस्यैव भविष्यति ।
नाम्ना हि जन्यते नाट्यसङ्क्रमेण च मे भ्रमः ॥८७॥
नृपस्तदा मदाकारं विभाव्य पुनरभ्यधात् ।
कीदृङ्मानवयोवर्णाकारैः सा[2] जननी तव ॥८८॥
तात ! नातिलघुर्नातिदीर्घा सा वयसा पुनः ।
तादृग्याद्दङ्मयि प्राच्यगर्भभाजि विभाव्यते ॥८९॥
वर्णेन स्वर्णसङ्काशा रूपेण तु भवादृशी ।
वत्से ! को जनकस्तस्यास्तात ! कश्चन तापसः ॥९०॥
आर्य ! भग्नोऽन्तरालेऽपि सुतासत्तामनोरथः ।
देव ! व्यथिष्ठा मा नेयं तावद् वेत्ति न तत्त्वतः ॥९१॥
वत्से ! स तापसो दृष्टस्तात ! लोकान्मया श्रुतः ।
वत्से ! किं वक्ति सा पृष्टा तात ! रोदिति केवलम् ॥९२॥
आर्य ! तस्या अनाख्याने निदानं रोदने च किम् ।
देव ! स्वाभिजनाख्यानव्रीडा बन्धुस्मृतिस्तथा ॥९३॥
वत्से ! नाख्याति चेत् किञ्चित् तत् कथं विदितं त्वया ।
तस्या नाट्यकलालोको लोकाद् वैद्याधरादिति ॥९४॥
तात ! विज्ञपयाम्येतदितोऽतिक्रान्तवत्सरे ।
मुनिर्महायशाः काञ्च्यामागमद् व्रतिभिर्वृतः ॥९५॥

१ वात्स । २ श्रि । ३ ग् । ४ सो । ५ ग् ।

पौरा पुराद् वहिस्तस्य वरिवस्याकृते ययुः ।
माता च तातानुज्ञाताऽगमत् तत्र मयान्विता ॥९६॥

तं त्रिकालविदं नत्वा प्रस्तावेऽपृच्छदुत्सुका ।
भगवन्नस्मि विख्याते जाता विद्याधरान्वये ॥९७॥

वियुक्ता शिशुरेवाथ बन्धुभिः पुरविप्लवे ।
तदादिश कदाऽप्येतैर्योगो मे भविता न वा ॥९८॥

वत्से ! तेन किमादिष्टं तात ! भाव्यचिरादिति ।
स कदेति पुनः पृष्टः प्रोचे मन्न्यस्तलोचनः ॥९९॥

यदा तवेदं कल्याणी पुत्रिकेत्यादि किञ्चन ।
वत्सेऽभिधत्से किं नातः तात ! नो वेद्म्यतः परम् ॥१००॥

देव ! ज्ञायत एवैतद् यदा पुत्रीयमाप्स्यति ।
करग्रहोत्सवं पत्युस्तदा ते ज्ञातिसङ्गमः ॥१०१॥

वत्से ! किमेतन्नो पृष्टमज्ञाते सङ्गमः कथम् ।
पृष्टमुक्तं च तेनाथ पिता ते ज्ञास्यति स्वयम् ॥१०२॥

ततस्त्वया सहैनां च नीत्वा निजनिकेतनम् ।
विधास्यति विधातव्यमस्याः सर्वमसाविति[२] ॥१०३॥

आर्य ! सन्देहमद्यापि मनः स्पृशति तं यदि ।
गत्वा काञ्चीपुरे मैषा चित्रलेखाऽपनेष्यति ॥१०४॥

इत्थं संलपतः सार्द्धं मया च सचिवेन च ।
तस्येष्टसिद्धिशंसीव शङ्खः प्राभातिकोऽध्वनत् ॥१०५॥

आदिश्यैकं नरं कञ्चित् कर्णे मन्न्यस्तलोचनः ।
जगामाथ विमानस्थः स नभोगैः समं नभः ॥१०६॥

१ न्या । २ After this, one speech by the minister is dropped as also the initial sentence of the reply by Vicitravīrya. ३ मे । ४ This is not the case in the original prose work where Vicitravirya orders Tapanavega to take Malayasundary and other girls round to show the place.

नरः सोऽप्याधिपत्येऽथ तासु कन्यासु मां न्यधात् ।
प्रावर्त्तयच्च तच्चैत्यरामणीयकवीक्षणे ॥१०७॥
तत्प्रेरिताऽहं विस्मेराऽपश्यं प्रासादसम्पदम् ।
पुरा दृष्टामिवाराद्धामिव निर्मापितामिव ॥१०८॥
तद्गर्भगृहगर्भस्थं वज्ररत्नविनिर्मितम् ।
तिरस्कुर्वाणमुद्दीप्रतेजसा दीपदीधितीः ॥१०९॥
अर्चितं दिव्यकुसुमैर्हरिचन्दनचर्चितम् ।
बिम्बमालोकयं श्रीमन्महावीरजिनेशितुः ॥११०॥
तत्तातकल्पमालोक्य पूर्वाभीष्टस्य कस्यचित् ।
स्मरन्तीवोल्लसद्वाष्पगद्गदा प्राणमं तदा ॥१११॥
स्वसंवेद्यमथानन्दशोकमिश्रं दशान्तरम् ।
तद्वक्त्रसंसजन्नेत्राऽनुभवन्ती चिरं स्थिता ॥११२॥
सखीभिश्चार्थिताऽम्भोधिं द्रष्टुं प्राकारकुट्टिमे ।
आरुह्य तस्य पश्यन्ती वीचिवाचालितं तलम् ॥११३॥
नौनिविष्टं तदासीननिद्रानिःसहनाविकम् ।
गृहीत्वा चामरच्छत्रैः परीतं परिचारकैः ॥११४॥
कुमारमेकमद्राक्षं त्र्यक्षनेत्रानलाकुलम् ।
मनोभवमिवाम्भोधिजलदुर्गमुपागतम् ॥११५॥
तेनेव मन्मथेनाऽथ हृदि मे कृतमास्पदम् ।
व्यापुर्वपुस्ततो भावास्तद्भटा इव सात्त्विकाः ॥११६॥
तदा विदग्धां किं मुग्धां मुकुलां किं विकस्वराम् ।
लोलां किं निश्चलां तस्मिन् न जाने दशमक्षिपम् ॥११७॥
कुमारः सोऽपि सोन्मादं साभिलाषं सविभ्रमम् ।
ससम्मदं समन्दाक्षं समदं मामुदैक्षत ॥११८॥
अथ तेन कृतादेशः सविभ्रमचलद्भ्रुवा ।
एकः प्रणम्य निर्यामयुवा किञ्चिदुवाच माम् ॥११९॥
देवि ! सिंहलभूचन्द्रचन्द्रकेतुनृपात्मजः ।
असौ समरकेतुर्नौतन्त्रेण वशयन्नृपान् ॥१२०॥

कथमप्यत्र सम्प्राप्तः प्रवेष्टुं जिनवेश्मनि ।
अपुण्यैर्दुःप्रवेशोऽस्मिंस्तव चित्तवदिच्छैति ॥१२१॥
तदादिश किमप्यस्याऽवतारपथशंसने ।
वेश्या वसन्तसेनाऽथ मयादिष्टाऽभ्यदादिदम् ॥१२२॥
अद्यैव नक्तमेषा नः केनाप्यानायि नायिका ।
भद्र ! वैदिशकः सर्वो राजकन्याजनोऽप्यसौ ॥१२३॥
इदं रूपमिवैतस्य कुमारस्यातिसुन्दरम् ।
अपूर्वं चैत्यमेतस्याः शंसत्येतत्पथं कथम् ॥१२४॥
ततस्तमूचे निर्यामः स्थितं देवस्य दर्शनम् ।
अपूर्वं बहु दृष्टं च तद् यामः शिविरं प्रति ॥१२५॥
सोऽपि मत्सन्निधित्यागकातरस्तमभाषत ।
सखे ! बलवदस्वास्थ्यं शरीरे मम सम्प्रति ॥१२६॥
तदत्र चन्दनप्रायपादपच्छायशीतले ।
समीहा मे क्षणं स्थातुं तथापि त्वं प्रमाणभूः ॥१२७॥
जगदे तेन यद्येवं गम्यतेऽवश्यमस्य हि ।
व्याधेर्वातज्वरस्येव शैत्यं सन्तर्पणं परम् ॥१२८॥
इति प्रेरितनौके च तस्मिन् तं प्रोषितस्मितम् ।
मदाननपतद्दीनेक्षणं वीक्ष्येदमूचुषी ॥१२९॥
वसन्तसेने कृत्वाऽपि प्रार्थनामकृतार्थकः ।
यात्येष राजपुत्रस्तत् किञ्चिदुक्त्वा स्थिरीकुरु ॥१३०॥
यावद्देवगृहादेति कोऽपि मार्गोपदेशकः ।
मालिन्यमन्यथाऽस्माकमित्युक्ता साऽवदत् पुनः ॥१३१॥
निर्याम ! स्वामिनोऽस्वास्थ्यं मत्वाऽपि चलितोऽसि किम् ।
किञ्च न प्रेक्षसे क्षोभादम्भोधेस्तरलां तरीम् ॥१३२॥
तद्गोत्रदेवतामेतां स्थिरीकृत्य प्रसादय ।
स्फुटीभवदभीष्टार्थप्रार्थनासंस्तवैः स्तवैः ॥१३३॥
आर्ये ! साधूक्तमित्युक्त्वा सोऽपि नावं न्यवर्त्तयत् ।
हस्यमानो ममालीभिः प्राञ्जलिस्तां जजल्प च ॥१३४॥

---

१ दित्सच्छति ।

देवि[1] स्थिरा सकर्णा सत्पुरुषोद्वहनोचिता ।
पात्रं च त्वमिति ज्ञात्वा जनो विज्ञपयत्ययम् ॥१३५॥

असौ मदवशाद् भूरिविभ्रमान् वहमानया ।
त्वयैवास्वास्थ्यमानीतः स्वामिनि ! स्वामिनन्दनः ॥१३६॥

तदस्मादेनमुच्चापमीनध्वजविजृम्भितात् ।
अनुकूलं चलन्ती त्वं परं संरक्षितुं क्षमा ॥१३७॥

नीता तरलतां गाढां तरङ्गालीभिरुत्पत ।
माऽम्बरे माऽम्बुधौ मज्ज मा च[2] गच्छ दिगन्तरम् ॥१३८॥

प्रस्थिता परमुद्वेगावर्त्तैऽमुं पातयिष्यसि[3] ।
आत्मनाऽपि [च] कन्दर्पपीडिता निपतिष्यसि ॥१३९॥

प्रेरिता गुरुभिर्वातैर्निपतिष्यसि मूर्द्धनि ।
जराजर्जरदन्तस्य कस्यापि प्रान्तभूभृतः ॥१४०॥

तन्मा भज द्विधाभावं स्वयंवरपथं श्रय ।
अक्षुण्णेन पथा नाथमेनं मानिनि ! मानय ॥१४१॥

भूत्वा राजोन्मुखी राजपोतप्रणयिनी भव ।
यद्वा किं वहुनोक्तेन कुरु स्वमहिमोचितम् ॥१४२॥

इत्युक्त्वाऽकारयत् तेन प्रणामं स बलान्मम ।
सोऽपि स्म प्राह कस्याहमानतिं मूर्ख ! कारितः ॥१४३॥

का वा त्वयाऽनुनीतेत्थमनिवद्धाभिधायिना ।
कर्णधारोऽभ्यधाद् देहि सालस्याग्रे विलोचने ॥१४४॥

येयमभ्यर्णमास्ते नौ रतिरूपनिवासभूः ।
कारितोऽस्यानतिं तस्यास्त्वदर्थेऽभ्यर्थिता च सा ॥१४५॥

अचिन्तयं ततश्चाहमहो ! नौच्छद्मनाऽमुना ।
मां प्रसादयता स्वामिभक्तेः समुचितं कृतम् ॥१४६॥

अहं[4] तु प्रार्थनामेनामदत्ता गुरुभिः कथम् ।
प्रपत्स्ये राजकन्यानां न्याय्यो[7] यद्वा स्वयंवरः ॥१४७॥

१ व । २ व । ३ ति । ४ र्ष । ५ त्वदार्थ । ६ हं । ७ यो ।

इतश्चेत्य ततश्चेत्यात् पुष्पपात्रभृतान्वितः ।
एकदेवलकेनेदं स राजपुरुषोऽभ्यधात् ॥१४८॥
बाले ! भाले निधेहीदं दग्धारिहरिचन्दनम् ।
मूर्ध्नि देवाङ्गसंलग्नशेषं कुसुमदाम च ॥१४९॥
पुष्पपात्रीं पुरोधाय ततो देवलकोऽवदत् ।
नृत्यन्त्याः पद्मरागोऽसौ रसनातश्च्युतस्तव ॥१५०॥
तदेतं सङ्गृहाणेति भाषमाणं च तं मुहुः ।
तथैव धीवराधीशदत्तनेत्राहमभ्यधाम् ॥१५१॥
भद्र ! किं भाषसे भूयो भूयः सर्वं श्रुतं मया ।
स्वीकृतो नायकश्चायमत्युज्जागररागभूः ॥१५२॥
किन्तु तिष्ठत्वयं यावदिहस्थाऽहं गता पुनः ।
स्वस्थानं स्वीकरिष्येऽमुं काञ्चीमध्यसमागतम् ॥१५३॥
श्रीखण्डेनाऽथ पुण्ड्राणि कन्यानां स नरोऽकरोत् ।
प्रापयं स्वयमेवाहमलिकं तिलकश्रियम् ॥१५४॥
आदाय पुष्पदामाऽथं [पा]थोधेः पूजनच्छलात् ।
तस्य राजकुमारस्य कण्ठदेशे न्यवेशयम् ॥१५५॥
सोऽपि स्रजा तया जातमिवोद्वाहमहोत्सवम् ।
आत्मनो मन्यमानस्तं निर्यामं नर्मणाऽब्रवीत् ॥१५६॥
मुहुः किमीक्षसे नास्या दास्याम्यंशमपि स्रजः ।
इतो भङ्ग्या कयाऽप्यन्यां याचस्व यदि ते स्पृहा ॥१५७॥
सखेदं सोऽप्युवाचेदं याचे कमिह यत् तव ।
नीता प्रणयिनी[4] ताश्च कन्याः कैश्चन मायिकैः ॥१५८॥
श्रुत्वेति किमु नर्मेदं किं वाऽयं वीक्षते न [5]माम् ।
एवं विमृश्य पश्यन्ती दिशः प्रेक्षे न कन्यकाः ॥१५९॥
विच्छायोऽभूत् कुमारोऽपि सालमालोक्य निर्जनम् ।
जगाद च विषादस्य सखे ! मात्मानमर्पय ॥१६०॥
कृतं त्वया हि स्नेहस्य बुद्धेर्भक्तेश्च सन्निभम् ।
इदं ममैव दुर्दैवललितं[6] फलितं सखे ! ॥१६१॥

---

१ च्टघ २। ग्हा । ३ द्ध । ४ र्नी । ५ मं । ६ त ।

तद् गत्वा शिबिरोद्देशं स्वदेशं प्रति सम्प्रति ।
प्रयाणं दृढवर्म्माणं दापय ध्वजिनीपतिम् ॥१६२॥
रायमर्पय ताताय राजन्यविजयार्जितम् ।
अलङ्कारकलापं च क्रमादम्बाजनस्य मे ॥१६३॥
विधेयो न च निर्बन्धः प्रतीपगमनाय मे ।
गतस्यापि हि गन्तारः प्राणा विरहिणो मम ॥१६४॥
तदेते वरमत्रैव देववेश्मपवित्रिते ।
त्यक्ताः प्रियाप्रतिच्छायाऽवगाहसुभगेऽम्भसि ॥१६५॥
इत्युदीर्य स विजृम्भिसाहसो हा ! कुमार ! किमिदं वितन्यते ।
एवमुद्गिरति तत्र नाविके क्षिप्रमक्षिपदपांनिधौ वपुः ॥१६६॥
जलधिगतमथाल्लिङ्ग्यैतं कृतार्थितजीविता
तनुमहमपि क्लेशावासं त्यजामि निजामिमाम् ।
इति कृतमनास्तत्रापप्तं निमील्य विलोचने
अपरमचलप्रेमा रामाजनो वितनोतु किम्× ॥१६७॥
अस्पृष्टैव तदैव तोयधिजलैः स्पष्टेक्षणा च क्षणा-
न्नैक्षे विश्वगुरोरगारमथ न प्राकारमब्धिं च न ।
तस्मिन्नेव परं सुखाश्रितमुपाप्रारम्भसम्भाविते
तल्पे सौधशिरोगृहान्तरसुहृद्यात्मानमालोकयम्* ॥१६८॥

इति [श्रीतिलकमञ्जरीसारे] नौवर्णनो नाम पञ्चमो विश्रामः ।
[इति पञ्चमं प्रयाणकम् ।]

× हरिणीछन्दः । * शार्दूलविक्रीडितवृत्तम् ।

## अथ षष्ठं प्रयाणकम् ।

विस्मयात् तिलके स्पृष्टे करं दृष्ट्वार्द्रचन्दनम् ।
भग्नस्वप्नभ्रमा तल्पादुपविष्टाऽस्मि विष्टरे ॥१॥

रूपं तस्य कुमारस्य तच्च प्रेमविचेष्टितम् ।
ध्यायन्तीमभ्यधादेत्य सखी मां बन्धुसुन्दरी ॥२॥
एष दिव्यः कथं वेषो लोचने किञ्च लोहिते ।
जृम्भारम्भोऽङ्गभङ्गश्च जागरं प्रोद्गिरन्ति ते ॥३॥
मया चायातया पूर्वं नात्र दृष्टाऽसि तद् वद ।
आकुलं कलयत्यन्यत् किं मय्यालि ! मनो मम ॥४॥
अथाऽस्या दिव्यसम्भोगशङ्कापङ्काविलं मनः ।
क्षालयन्ती क्षेपावृत्तं वृत्तान्तमहमभ्यधाम् ॥५॥
निर्वृता च तमावर्त्य पृच्छन्ती सा चिरं स्थिता ।
गतायां च गृहं तस्यां विस्मिताऽहमचिन्तयम् ॥६॥
तिलकस्यानुभावोऽयमपश्यद्[1] यदसौ न माम् ।
तदा हृतां च निर्यामो निश्चिकाय स नायकः ॥७॥
प्रमृष्टेऽथ पुनर्दृष्टा तस्मिन्नस्मिन् वयस्यया ।
यद्वाऽवदत् तदैवेदं दृग्धारीति स खेचरः ॥८॥
एवं विकल्पैस्तदहर्विनाऽऽहारादिनाऽनयम् ।
अन्येद्युर्मामुपागत्याबोधयद् बन्धुसुन्दरी ॥९॥
सखि ! बाष्पजलक्लिन्नकपोला किमु खिद्यसे ।
तव तेन सहावश्यं भविष्यति समागमः ॥१०॥
यद् विपार्यति नैवार्यवसुरातवचः क्वचित् ।
निर्बन्धबुद्धिरप्राप्ये भवेन्न च भवादृशाम् ॥११॥
इत्याश्वासनया साक्षादब्धौ पतितमप्यमुम् ।
स्वमिवोत्प्रेक्ष्य जीवन्तमाशाबन्धादधां वपुः ॥१२॥
एकदाऽभ्यागते पुष्पायुधायुष्टोमयज्वनि ।
विप्रयुक्तजनप्राणाभिचारचतुरे मधौ ॥१३॥

---

१ ष्टि । २ क्षि । ३ तृ । ४ श्च । ५ ग्हा । ६ स्वा । ७ णां ।

विशेषदुःखितां सख्यां[ऽऽश्वास्यमानां वियोगिनीम् ।
कथाभिर्बन्धुसुन्दर्या चिरन्तनवियोगिनाम् ॥१४॥

प्रातः कात्यायनी नाम शुद्धान्तपरिचारिका ।
सोत्सुकाऽऽगत्य मामाह] देवी दिशति सादरम् ॥१५॥

कामत्रयोदशीयं तत् [चित्रनेपथ्यमण्डितः ।
प्रस्थितः प्रमदालोको] भवत्या सवयस्यया ॥१६॥

कुसुमाकरसुद्यानमद्यानङ्गमहोत्सवे ।
गन्तव्यमर्चनीयश्च विशेषाद् विषमायुधः ॥१७॥

दत्ताऽसि मन्त्रिमन्त्रेण [१]त्रा सन्धिविधित्सया ।
वज्रायुधस्य सेनान्ये [२]श्वः प्रदानं भविष्यति ॥१८॥

श्रुत्वा तद्वचोवज्रव्याहतेवास्मि मूर्च्छिता ।
अवाप्तचेतना चैतच्चेतसाऽहमकल्पयम् ॥१९॥

अधिक्षिपामि किं तातमथवा सचिवानहम् ।
यद्वा ममैव दुष्कर्मापराध्यति पुरा कृतम् ॥२०॥

आशयाऽलीकयाऽप्येवं जीवितुं यन्न लभ्यते ।
निश्चित्याङ्गपरित्यागमिति चेटीमवादिषम् ॥२१॥

सायमेष्याम्यहं भद्रे ! सम्प्रत्युन्निद्रकाक्लमः ।
एवं तस्यां विसृष्टा[३]यामभ्यधाद् बन्धुसुन्दरी ॥२२॥

मा विषीद प्रसीद त्वं कुरुष्व गुरुशासनम् ।
भर्तृपुत्रि ! महेऽमुष्मिन् माननीयो मनोभवः ॥२३॥

एवमुक्ते तया स्नात्वा परिधार्या[४]ऽरुणांशुके ।
अन्तःपुरान्तराऽशोकस्थितं स्मरमपूजयम् ॥२४॥

---

१ After this there seems to be lacuna as the description of the arrival of Gandharvadatta's maid Kātyāynī is not mentioned. Moreover, after vs. No. 16 follows vs. No. 19, which shows that something is missing due to some scrible error here. The lacuna is proposed to be bridged by newly supplying the portion shown in square brackets and giving fresh verse Nos. २ स्वः । ३ स्पृ । ४ य ।

ततस्तातान्तिके गत्वा क्षणं स्थित्वाऽहमुत्थिता ।
मुहुस्तदास्यं पश्यन्ती भूयो दुर्लभदर्शनम् ॥२५॥
एत्य मातुर्गृहे भुक्त्वा भावितद्विरहातुरा ।
तया सहैकपात्रेऽन्नपिण्डान् विषमयानिव ॥२६॥
लीलोद्यानमगां तत्र पत्रिणः पादपानपि ।
स्वहस्तलालितान् बालानालपं बाष्पविह्वला ॥२७॥
सरोजिन्यां ततस्तेजोनिधौ निपतितेऽम्बुधौ ।
मयीव म्लानिमाप्तायामध्यारोहं शिरोगृहम् ॥२८॥
विसर्जितजनाऽजल्पं तल्पस्थां बन्धुसुन्दरीम् ।
निदिद्रासुरहं गच्छ त्वमप्यालि ! निजालयम् ॥२९॥
साऽपि स्वैरमनालापादकालप्रेषणादपि ।
जाताशङ्का क्षणं स्थित्वा किञ्चिद् ध्यात्वा विनिर्ययौ ॥३०॥
तस्यां गतायामुत्थाय तल्पान्निर्विडितांशुका ।
क्षणाक्षिप्तपरीवाराऽलक्षिता द्वारमागता ॥३१॥
सदनप्रत्यगुद्यानपृष्ठेनारामभव्रजम् ।
कुसुमाकरनामानमहमप्रहताध्वना ॥३२॥
उद्यानपालकाशङ्का शङ्कुष्वपि वितन्वती ।
सख्या धृतेति मन्वाना लताल्ग्नेऽपि चाञ्चले ॥३३॥
कामायतनमागत्य द्वारस्थैव सुमाञ्जलिम् ।
क्षिप्त्वा देवमहं पञ्चबाणं प्राणंशिषं ततः ॥३४॥
बहिः प्राकारवलयादेत्य मृत्युमनोरथा ।
अशोकविटपे शोकशान्त्यै पाशमजीघटम् ॥३५॥
आसूत्र्य गात्रिकाबन्धमभिष्टूयेष्टदेवताम् ।
बध्वा बद्धाञ्जलिर्लक्षमन्तरिक्षेऽभ्यधामहम् ॥३६॥
लोकपालाः कुमारस्य तस्य प्रारभ्य दर्शनात् ।
पुमांश्चेत् कोऽपि साकाङ्क्षं चक्षुषाऽपि न वीक्षितः ॥३७॥
भवान्तरेऽपि तद् भूयात् तेनैव सह सङ्गमः ।
इत्युक्त्वा कन्धरान्यस्तपाशाऽऽत्मानमलम्बयम् ॥३८॥

---

१ स्था । २ र्थे or र्ये । ३ वि । ४ मष्टेनो ।

अथाऽशोकोऽपि शोकार्त्त इवोड्डीनखगारवैः ।
त्रातारमाह्वयद् भारनम्रोन्नम्रलताभुजः ॥३९॥
अथाऽपश्यमहं पाशसङ्कोचाकुञ्चितेन्द्रियाम् ।
निर्वेदमेदुराक्रन्दविधुरां बन्धुसुन्दरीम् ॥४०॥
रुदन्तीं रुद्धवाणिस्तां पाणिनैव न्यवारयम् ।
प्रायुङ्क्त साऽप्यथोपायान् पाशमोक्षकृते क्षणम् ॥४१॥
क्षीणोपाया च साऽधावन्मन्मथायतनोन्मुखी ।
अतः परं च नो किञ्चिज्ज्ञातं मूर्च्छागमान्मया ॥४२॥
वेलयाऽथ कियत्याऽपि प्रभवच्चेतना तनुम् ।
दधानाऽहं सुधापङ्कपर्यङ्कशयितामिव ॥४३॥
यो मे वंशो यथा वृद्धिरपहारो यथा निशि ।
यथा विद्याधरालापः कुमारालोकनं यथा ॥४४॥
स्रजः क्षेपो यथा पातः पातस्तस्य यथाऽम्बुधौ ।
इत्यादि सास्रं शंसन्तीमश्रौषं बन्धुसुन्दरी[म्] ॥४५॥
कोऽयमासतमो यस्मै रहस्यं कथयत्यसौ ।
देहस्पर्शश्च कस्यायममृतस्यन्दसुन्दरः ॥४६॥
विमृश्येति मयाऽऽनन्दमन्दोन्मीलितनेत्रया ।
शृङ्गारमुद्वहन्मारज्वरातुरजनोचितम् ॥४७॥
वीजयन्मां निजोत्सङ्गकलितां कदलीदलैः ।
स एव ददृशेऽदृष्टपूर्वः पार्थिवसम्भवः ॥४८॥
विलोक्याऽतर्कयं चाहं बभूव किमहो ! बहिः ।
पाशसङ्कोशविधुरान्ममैव हृदयादयम् ॥४९॥
गिरामगोचरं किञ्चित तदङ्गस्पर्शतः सुखम् ।
वेदयन्ती सुदुःप्रापं प्रापं विह्वलतामहम् ॥५०॥
किं ते सखि ! दुनोतीति सख्याऽहं व्याहता पुनः ।
संवृताङ्गा तदुत्सङ्गादुत्थायोपाविशं तटे ॥५१॥
मज्जानुन्यस्तमूर्द्धा सा रुदित्वा चिरमभ्यधात् ।
सखि ! सर्गादमुतं धातुः पश्यैतं जीवितप्रदम् ॥५२॥

१ त । २ प्ल । ३ च । ४ शा ।

अयं हि मत्समाक्रन्दादेत्योत्प्लुत्यास्त्रधारया ।
छित्वा च पाशं प्रत्यैच्छत् त्वां पतन्तीं भुवस्तले ॥५३॥
तदर्हति प्रणामादिसत्कारमुपकारकृत् ।
इत्युक्त्वा पणिना मौलिं तमभ्यनमयन्मम ॥५४॥
प्रतिप्रणाममाधाय सोऽभ्यधाद् बन्धुसुन्दरीम् ।
त्वमेवास्याः शुभे सर्वप्रकारमुपकारिणी ॥५५॥
अहं पुनर्महानर्थहेतुरस्याः किलाभवम् ।
वचस्तदुपकारीति त्रपाकरमिदं मयि ॥५६॥
साऽपि[1] स्माह महानर्थहेतुस्त्वमिति नानृतम् ।
त्वदभिप्रायतोऽनर्थहेतुरस्याः कथं भवान् ? ॥५७॥
स व्याहृत रहस्यं तत् कथङ्कारं प्रकाश्यते ।
ततः सा मन्मुखे चक्षुरक्षिपत् प्रश्नकाङ्क्षया ॥५८॥
स्थित्वाऽहं च तदभ्यर्णे कर्णे वृत्तं तदभ्यधाम् ।
साऽथ साङ्गमिवानङ्गं तं निर्वर्ण्य वहन्मुदम् ॥५९॥
तद् भवत्विदमेवास्यातिथ्यमित्यस्य पाणिना ।
मत्पाणिं स्वेदसम्पन्नहस्तालेपमयोजयत् ॥६०॥
अभ्यधाच्च विधातव्यं कुमारेण तथा यथा ।
मत्सखीयं न दुःखस्य भूयो भवति भाजनम् ॥६१॥
स व्याहरदिहाप्यर्थे का नाम प्रार्थना मयि ।
इदमेव विधेयं मे प्रमाणं विधिरत्र तु ॥६२॥
कृतप्रश्नश्च सख्याऽसौ शंसन् दिग्विजयक्रमम् ।
पयोधिवार्त्ताप्रस्तावेऽपृच्छ्यतोत्सुकया मया ॥६३॥
त्वमार्यपुत्र ! केनाब्धेस्तीरमुत्तारितस्तदा ।
सोऽप्युवाच तदा[2]न्तर्द्धौ वार्द्धौ निपतितः प्रिये ! ॥६४॥
दिव्यां वाचमथाऽश्रौषं कुमार ! किमिदं कृतम् ।
प्रपाततीर्थैः सदृशं तीर्थं[3] वीरप्रभोरपि ॥६५॥
मामुपालभते कोऽयमित्युन्मीलितलोचनः ।
सैन्यासन्नतटेऽपश्यं नावं विस्मेरनाविकम् ॥६६॥

---

१ स । २ म । मि । ३ वा ।

केनोद्धृतोऽहं नौश्चेह कथं प्राप्तेति विस्मितम् ।
उपेत्य राजलोको मामुत्सुकः शिविरेऽनयत् ॥६७॥

अहानि कानिचित् तत्र विरहक्षामविग्रहः ।
त्वामेवाहर्निशं ध्यायन्नतिवाहितवानहम् ॥६८॥

सखेदं तारकोऽन्येद्युर्व्याजहार कुमार ! किम् ।
क्रियते कोऽपि नोपायः शामाय दवथुद्विषः ॥६९॥

किं ते स्मृतिपथं नैति यत् तदा भाषितं तया ।
नायकं स्वीकरिष्येऽमुं काञ्चीमध्यसमागतम् ॥७०॥

तत् किं काञ्चीपुरीं गन्तुं गृह्यतेऽद्यापि नोद्यमः ।
अत्रान्तरे प्रतीहारी प्रविश्येति व्यजिज्ञपत् ॥७१॥

कुमार ! देवपादान्तादागतो लेखहारकः ।
अस्ति द्वारीत्यथादेशान्मम प्रावेशयद् द्रुतम् ॥७२॥

सोऽपि नत्वाऽक्षिपल्लेखं तस्मिन्नस्मि च दृष्टवान् ।
सख्यं दूतमुखेनास्मान् द्रविडेशोऽरिपीडितः ॥७३॥
याचते स्म तदाऽस्माभिः संश्रुत्य प्रहितं बलम् ।
कल्याणशालिना तच्च गत्वाऽधिष्ठेयमञ्जसा ॥७४॥

अथ हृष्टः सखे ! तातलेखेनैव तव स्पृहा ।
पूर्णेत्युक्त्वा सुवेलाद्रेः शेषं सैन्यमनायिषम् ॥७५॥
प्राप्तः ससैनिकः काञ्च्यां त्वत्पित्राऽथ प्रवेशितः ।
आलोके नैकधाऽत्र त्वां द्वेधाऽपि क्षिप्ततारकः ॥७६॥

अद्य प्रद्युम्नयात्रायामत्रायातः प्रगेऽप्यहम् ।
त्वद्दर्शनाशया स्त्रैणमीक्षमाणोऽनयं दिनम् ॥७७॥
प्राप्तमायतनेऽत्रापि तया नायतनेत्रया ।
इत्युल्बणाधिः सन्ध्यायां विसृज्य स्वपरिच्छदम् ॥७८॥
सङ्कल्पजाग्रतो जाग्रदुत्पलं तल्पमास्थितः ।
जालायातैः कृतायासः प्रासकल्पैः करैर्विधोः ॥७९॥

---

१ न्तु । २ त् । ३ ष्टे । ४ This is not in the original prose work.

हा ! हा ! कश्चिन्महासत्त्वः स्त्रीरत्नं त्रायतामिदम् ।
इत्याक्रन्ददुपेत्यैतां सान्त्वयंस्त्वामुपागमम् ॥८०॥

विरामेऽस्य गिरामेतद्वयस्या मे तमब्रवीत् ।
वज्रायुधाय सन्धित्सुर्दास्यत्येनां प्रगे पिता ॥८१॥

तद् युक्तं नक्तमेवास्याः स्वदेशे नयनं तव ।
सोऽब्रवीदत्र पित्राऽहं [1]प्रहितो हितमिच्छता ॥८२॥

तदस्या हरणेन स्यादहितं विहितं न किम् ।
तद् विधेयं भवेद् यस्मादभीष्टमय[श]स्तु न ॥८३॥

अथ प्रापय्य[2] शुद्धान्तमावामावासमव्रजत् ।
कथञ्चिद् विरहार्त्ताऽहमध्यारोहं शिरोगृहम् ॥८४॥

हित्वा शालीनतामाली मातुराख्यन्ममातुरा ।
अपहारादिवृत्तान्तं सर्वं माताऽपि मत्पितुः ॥८५॥

आकर्ण्य जातवैवर्ण्य[ः] सोऽवदद् देवि ! दीयते ।
वज्रायुधाय चेन्नेयं सन्धिर्विघटते तदा ॥८६॥

दीयतेऽथ तदा पुत्री विसूत्रयति जीवितम् ।
तद् युज्यतेऽधुनैवास्या देशान्तरविसर्जनम् ॥८७॥

प्रकाश्यते प्रजास्वेतदनङ्गोत्सवजागरात् ।
शूलेनोन्मूलितप्राणा प्रायादायुष्मती दिवम् ॥८८॥

स्वस्थापत्यमथापत्यप्रियः प्रस्थाप्य मां तदा ।
आनाययत् त्रपानम्रामङ्कमारोप्य चालपत् ॥८९॥

वत्से ! क्षमस्व स्खलितं कलितं न हि ते मनः ।
त्वन्मात्राऽप्यधुना येनेदं[3] व्याख्यायि पुरा न मे ॥९०॥

स्वस्था तदाऽऽ[स]स्व दास्ये त्वां प्राणच्छेदेऽपि न द्विषे ।
केवलं कश्चिदायासस्त्वया सह्यः प्रवासजः ॥९१॥

इहस्था दुर्निषेधा हि त्वं प्रातः सम्प्रदार्थिनाम् ।
इत्युक्तवन्तं जनकं जगाद जननी मम ॥९२॥

---

१ थ on प्य । २ य । ३ °नार° ।

देव ! देशान्तरं प्राप्या चेत् तत्र मलयाश्रितम् ।
यातुं प्रशान्तवैराख्यमेषा वैखानसाश्रमम् ॥९३॥

देवेन सह यत्राभून्मम प्रथमदर्शनम् ।
तत्राऽसौ हि सुखं स्थाता तातशान्ततपान्तिके ॥९४॥

एवमस्त्विति तातस्यादेशादारुह्य हस्तिनीम् ।
तरङ्गलेखयाऽम्बाया बालसख्या समन्विता ॥९५॥

निवृत्तपौरसञ्चारनिशीथपृथुले पथि ।
निरगां नगरीतोऽहं क्रमात् प्रति तमाश्रमम् ॥९६॥

तापसीपरिवारैव व्यापारैः सेचनादिभिः ।
स्मरन्ती तस्य निन्येऽहं तत्र कञ्चिदनेहसम् ॥९७॥

एकदा चागतं काञ्च्याः कञ्चित् कुलपतेः पुरः ।
गदन्तं तद्गतोदन्तमश्रौषमुषसि द्विजम् ॥९८॥

यथा कामत्रयोदश्यां युध्यमानः पुराद् बहिः ।
जितेनाऽथारिणा नक्तं दीर्घनिद्रां स लम्भितः ॥९९॥

तन्निशम्यागमं मूर्च्छां तदन्ते किमतः परम् ।
श्रोतव्यमिति मत्वाऽब्धेस्तटं निर्जनमव्रजम् ॥१००॥

निर्वापये वपुः प्रेयोवियोगोत्तप्तमम्बुधौ ।
इत्यात्तधीः पदध्वानं श्रुत्वा प्रत्यग् व्यलोकयम् ॥१०१॥

तरङ्गलेखामायान्तीं दूराद् धृतकमण्डलुम् ।
दृष्ट्वा च कथमिदं स्यादित्यपश्यं दिशोऽखिलाः ॥१०२॥

मृतपक्षिपरिक्षिप्तमूलं किम्पाकपादपम् ।
आराद् वीक्ष्य मयाऽभक्षि तस्य मृत्युफलं फलम् ॥१०३॥

तद्विषव्याकुलाऽऽश्रित्य शिलामेकामुपाविशम् ।
तरङ्गलेखाऽप्यागत्य परुषं मामभाषत ॥१०४॥

कस्तवात्र किमत्रास्ति कार्यं तेऽनल्पचापले ! ।
इत्याद्यशुश्रूपुरिव प्रयाता मेऽथ चेतना ॥१०५॥

१ वैधस्वा० । २ त । ३ स्था । ४ तं । ५ थ । ६ स ।

लब्धसंज्ञा कियत्याऽपि वेलया जडिताऽभ्यधाम् ।
तरङ्गलेखे[1] ! मा सिञ्च कमुण्डलुजलेन माम् ॥१०६॥
उन्मुद्रिताक्षी चाद्राक्षमार्द्रदिव्यांशुकावृतम् ।
स्वमेव दारुसद्मान्तःपद्मपर्यङ्कशायिनम् ॥१०७॥
विस्मयादुत्थिताऽपश्यं तत् तरद्दारुमन्दिरम् ।
सरस्यदृष्टपारेऽत्र यानपात्रमिवार्णवे ॥१०८॥
कस्येदं दारुसद्म स्याद् यद्वाऽलं चिन्तयाऽनया[2] ।
भूयोऽभीष्टं करोमीति सरो निपतनोत्सुका ॥१०९॥
बध्नती तेन तोयार्द्रदिव्यवस्त्रेण[3] गात्रिकाम् ।
लेखं तदञ्चले वीक्ष्य कौतुकेन व्यभावयम् ॥१००॥
स्वस्ति श्रीमन्महाराजचन्द्रकेतुपदाम्बुजे ।
भृङ्गः समरकेतुः श्रीकाञ्च्यां द्रविडशासितुः ॥१११॥
पुत्रीं विष्टपनेत्रेन्दुकलां मलयसुन्दरीम् ।
निर्वापयति सप्रेमगौरवं क्षेमवार्त्तया[4] ॥११२॥
स्मरामि स्मरयात्रायां रात्रावुपवने रहः ।
तानि ते सुभ्रु[5] ! विश्रम्भललितानि दिवानिशम् ॥११३॥
अत्रैव च वचः किञ्चिद् बोध्यते बन्धुसुन्दरी ।
श्रुत्वा मद्विक्रमं प्रीतात् पितुः प्रातः सखीं तव ॥११४॥
लप्स्ये निर्वाच्यमित्याशा पूर्णा मे न जितेऽप्यरौ ।
निःप्रमादं तनौ देव्यास्तथापि स्थीयतामिति ॥११५॥
दिष्ट्या जीवति मे प्रेयान् न श्रेयान् मरणादरः ।
मूलस्थानं परं वारि मृष्टं कष्टं न लभ्यते ॥११६॥
इत्यादि चिन्तयन्त्या मे तत् तरत्तीरमासदत् ।
तीरेऽवतीर्य[6] च स्नानदेवार्चनविधिं व्यधाम् ॥११७॥
पुष्पावचायिनी[7] योषित्प्रोषितप्राययौवना ।
एका तत्राऽथ मां वीक्ष्य वत्से मलयसुन्दरि ! ॥११८॥
कुतस्त्वं कथमेका च का चेयं वल्कलावृतिः ।
इति ब्रुवाणा बाहुभ्यामग्रहीत् कण्ठकन्दले ॥११९॥

---

१ ख । २ चिन्तनयोया । ३ द्र । ४ याः । ५ भ्र । ६ ई । ७ च्चया ।

केयं सप्रत्यभिज्ञेव मामेवमुपगूहति[1] ।
इत्यहं विमृशन्ती तां चित्रलेखेत्यवागमम् ॥१२०॥

अत्रान्तरे महादेवी चक्रसेनस्य चक्रिणः ।
खेचरीभिर्वृता तत्र पत्रलेखा समागमत् ॥१२१॥

सोवाच सख्यः कस्येदं विमानं हारिचन्दनम् ।
ततो मुक्तावली नाम कोशधामपदाऽवदत् ॥१२२॥

तदेवेदं यदानेतुं देवि ! गन्धर्वको गतः ।
यदत्र वस्त्रे दृश्येते स्वामिन्या तस्य दापिते ॥१२३॥

साऽप्यवेक्ष्य तदेवेदं कामवस्थामगात् पुनः ।
गन्धर्वक[ः] स इत्युक्त्वा चित्रलेखामुपागमत् ॥१२४॥

अपृच्छच्च शनैः केयं[2]मित्यथोदश्रु साऽवदत् ।
धिग् विधिं येन नीतेयं ही तेऽपि प्रश्नगोचरम् ॥१२५॥

वेत्त्येवं[3] तावद् भवती भगिनी भ[4]त्कनीयसी[5] ।
आसीद् गन्धर्वदत्तेति तां दर्शा[6]न्दां पितुर्गृहात् ॥१२६॥

लास्यलीलायितं स्वल्पकालशिक्षितमीक्षितुम् ।
वैताढ्ये[7] वैजयन्तीं स्वां पुरं मातामहोऽनयत् ॥१२७॥

धरित्रे त्वभ्यमित्रीणे तस्यां च पुरि जातुचित् ।
सौप्तिकं शत्रुसामन्तो जितशत्रुरपातयत् ॥१२८॥

तद्बलेनाऽऽकुले चान्तःपुरेऽन्तर्वंशिकस्ततः ।
त्रस्तां समरकेलिस्तामुत्क्षिप्योदपतन्नभः ॥१२९॥

तत्पितुर्धाममप्राप्नुकामः शस्त्रव्रणाकुलः ।
प्रशान्तवैरेऽ[8]वातारीन्मलयोपत्यकाश्रमे ॥१३०॥

तां क्षिप्त्वाऽङ्के कुलपतेर्निर्वृतः स दिवं ययौ ।
मुनिनाऽपत्यवद् दृष्टा स्पृष्टाऽथो यौवनेन सा ॥१३१॥

१ ति । २ यं । ३ त्वे । ४ य । ५ सो । ६ शां । ७ ढ्य । ८ वो ।

तत्रायातः जातुचित् काञ्चीं +पतिः कुसुमशेखरः ।
अथ तां मुनिना दत्तां स प्रीतः परिणीतवान् ॥१३२॥

नीत्वा च स्वपुरं प्रेम्णा महादेवीपदेऽकरोत् ।
क्रमादनुपमामेकां[1] सुतामेतामसूत सा ॥१३३॥

[क्र]माभ्यस्तकला चेयं सायं सौधाग्रशायिनी ।
हृत्वा नभश्चरैर्नीता पञ्चशैले जिनालयम् ॥१३४॥

तत्र वीरप्रभोर्यात्रां पाक्षिकीमीक्षितुं मया ।
गतया ददृशे मव्येमण्डपं कार्तिकीनिशि ॥१३५॥

चित्रलेखामुखादेषा श्रुत्वेत्यानन्दशो[क]भाग् ।
मामालिङ्गत् करे धृत्वा निन्ये चैनं जिनालयम् ॥१३६॥

कृतादिजिनपूजा मां गृहे नेतुमतत्वरत् ।
अम्ब ! स्थातुं मनोऽत्रैव मुनिकन्याव्रतेन मे ॥१३७॥

मैयेत्युक्ता तदेवोचे[4] सा मुहुः स्नेहमोहिता ।
अदान्मदाग्रहे चास्य मठस्यान्तरभूमिकम् ॥१३८॥

सा मे चतुरिकामेतां कृत्वा च परिचारिकाम् ।
तद्विमानं सरोदृष्टमारुह्य स्वगृहं ययौ ॥१३९॥

स्थिताऽस्मि चात्रैव गतत्रपैषा लेखात् किलोत्प्रेक्ष्य तमक्षताङ्गम् ।
प्रशान्तवैराश्रमतापसीभिः प्रत्तं जपन्ती प्रियमेलमन्त्रम् ॥१४०॥

स्वदुःखदहनैर्जगज्ज्वलदिवेक्षमाणा क्षणं
क्षणं च परिचिन्वती किमपि मोहरूपं तमः ।
क्षिपामि दिवसानिमान् मम न वेद्मि कालः कदा
स्मरेदिति निवेदितस्वचरिता [5]व्यरंसीदसौ *॥१४१॥

इति श्री[तिलकमञ्जरीसारे] मलयसुन्दरीवृत्तान्तो नाम षष्ठो विश्रामः।
[इति पष्ठं प्रयाणकम्]

+One syllable is more in this quarter; probably the poet intended to take 'ञ्ची' as ह्रस्व !

१ का । २ नी । ३ यमे । ४ च । ५ सो । *पृथ्वीवृत्तम् ।

## अथ सप्तमं प्रयाणकम् ।

अथाहं तदन्यथाक्रान्तोऽवदं मलयसुन्दरि ! ।
मा विषीदास्ति दीर्घायुः शुभंयुस्ते स वल्लभः ॥१॥
तवाद्यदर्शनादर्वाक् तस्य सर्वमवैम्यहम् ।
न जाने युवयोर्योगः कथं भावी दवीयसोः ॥२॥
साऽभ्यधात् किमनेनेत्थमनुभूतफलेन मे ।
रतिर्मनोभवस्येवोज्जीवनेनैव जृम्भते ॥३॥
किन्तु चेतः क्षिणोत्येतत् प्रीतिदं मादृशामपि ।
त्वद्दर्शनं विना स्थाता कथं स प्रणयी जनः ॥४॥
अथाऽवोचं न चिन्त्योऽर्थः स बुधैर्यो न सिध्यति ।
साऽप्यथोवाच नन्वेष लेखदानेन साध्यते ॥५॥
किन्त्वस्ति दैवान्नैवात्र पक्षिरूपोऽपि खेचरः ।
अथैत्यैकः शुकः प्राह अहमस्मि तदादिश ॥६॥
कीरस्योदीरणादेवं साऽभूत् संभ्रमविस्मया ।
अहं त्वलक्षयं पक्षिमात्रं न स्यादयं शुकः ॥७॥
क्षिप्त्वा तस्याग्रतो लेखं न्यस्तधातुरसाक्षरम् ।
अभ्यधां भद्र ! लेखोऽयं लौहित्यतटतस्थुषः ॥८॥
प्राप्यः कमलगुप्तस्य सेनान्यः सत्वरं त्वया ।
तं च चञ्चुपुटे धृत्वा सोऽगमद् गगनाङ्गणम् ॥९॥
याम्यचारेण लौहित्यमादत्य प्रस्थिते शुके ।
भानौ च सन्ध्याविधयेऽचलन्मलयसुन्दरी ॥१०॥
अथाऽपूर्वाभ्युपगमात् खगे नेत्रपथातिगे ।
जगत्तिमिश्रमाश्चर्यं मम मानसमानशे ॥११॥
समापिते विधौ सान्ध्ये भूधरालोकलोलुभः ।
मठाग्रभुवमारोहमिन्दुरप्युदयाचलम् ॥१२॥
कृतप्रदोषकृत्यां तां मणिमण्डपिकाङ्गणे ।
उपविष्टामुपागत्योपाविशं नातिसन्निधौ ॥१३॥

१ त्यो । २ घे । ३ म । ४ रो ।

ततश्चतुरिकाऽऽगत्य बभाषे भर्तृदारिके ! ।
आर्यो चारायणो द्वारि स्थापत्यः स वदत्यदः ॥१४॥
आर्ये ! तिलकमञ्जर्य्या गाढमस्वस्थदेहया ।
प्रहितोऽहमिहानेतुं त्वरयान्मलयसुन्दरीम् ॥१५॥
तामपृच्छदसौ वेत्सि किञ्चिदस्वास्थ्यकारणम् ।
साऽवादीद् वेद्मि नो सम्यक् परं ह्यस्तनवासरे ॥१६॥
कुसुमान्यहमाहर्तुं सरस्तीरवनं गता ।
रममाणाऽथ तत्रैवाययौ तिलकमञ्जरी ॥१७॥
रन्तुमन्तर्वणं सर्वः प्रारेभे तत्सखीजनः ।
पुष्पावचायिनी साऽपि विवेशैलालतागृहम् ॥१८॥
अथाम्बरात् पविक्षुण्णाञ्जनाद्रिशिखरोपमः ।
कोऽपि सत्त्वोऽपतत् तत्र तडागे गजगर्जितः ॥१९॥
ततस्तत्पातनिर्यातविह्वलैर्गह्वरादिषु ।
द्रुतमद्रिप्रदेशेषु प्रणेशेऽनुचरीजनैः ॥२०॥
कियतीमप्यतिक्रम्य वेलामेलालतागृहात् ।
निर्जगाम सलज्जेव देवी तिलकमञ्जरी ॥२१॥
गत्वा तमालमूलं च दुकूलं कुर्वती दृढम् ।
जृम्भारम्भोल्लसद्बाष्पकणक्लिन्नेक्षणा क्षणम् ॥२२॥
स्थिता प्रतीपं पश्यन्ती लताजालान्तरेण सा ।
पुनर्गता लतागारेऽलीकपुष्पावचायिनी ॥ २३ ॥
स्थित्वा तद्द्वारि सोद्वेगा वेगात् तद्वनमभ्रमत् ।
अथारुह्य सरःपालिमालुलोके दिशोऽखिलाः ॥२४॥
किं वस्तु किञ्चित् किं वाऽसौ सखीलोकं विलोकते ।
विना मनोभवं भावा यदि वा न भवन्त्यमी ॥२५॥
तदद्धा विप्रलब्धाऽसौ केनापि सुभगात्मना ।
मयेत्यभ्यूहितेऽभ्येत्य नीताऽऽलीभिर्बलाद् गृहम् ॥२६॥
तत्राऽप्यगमयत् त्यक्तभुक्तादिः प्राक्तनं दिनम् ।
एवमुक्ते भयोन्मुक्ताऽलपन्मलयसुन्दरी ॥२७॥

१ स्था । २ ष्य । ३ ष्ट्या । ४ °द्बवचन° । ५ °तगृ° ।

रोग[:] सोऽल्पतरो गच्छ तत् त्वं चारायणान्विता ।
तामाश्वास्य वदेश्चेदं मद्वचो यन्मयेक्षितः ॥२८॥
दूरदेशान्तरायातः प्रातरादिजिनालयम् ।
मेघवाहनराजेन्दोर्नन्दनो हरिवाहनः ॥२९॥
स च मद्वचसा तस्थौ मठेऽत्राद्यतनं दिनम् ।
तं वन्धुकल्पमुस्रष्टुं युक्तं नेत्यस्मि नागता ॥३०॥
गतायां च ततस्तस्यां चिरं मलयसुन्दरी ।
शंसन्ती स्वानुभूतानि स्थित्वा शय्यां निजां ययौ ॥३१॥
अहं तु पद्मपर्यङ्के रत्नमण्डपिकास्तृते ।
स्थितश्चतुरिकाहस्तमृद्यमानपदद्वयः ॥३२॥
स्मृत्वा तिलकमञ्जर्याः स्मरार्त्तिं कीर्त्तितां तदा ।
वहुमानं वहन्नात्मन्यहं चिन्तितवानिति ॥३३॥
अरे चेतः ! कृते यस्याः प्रापितोऽस्मीदृशीं दशाम् ।
सा तवोच्छ्वसितं जाता स्वयमेव वशंवदा ॥३४॥
एतदभ्यर्थये किन्तु प्रवर्त्तेथास्तथा यथा ।
उपहासास्पदं न स्यामस्याः प्रथमदर्शने ॥३५॥
इत्यादि ध्यायतो मेऽगाद् वेगाद् दीर्घाऽपि सा निशा ।
सोऽप्युदीरितवान् प्रातर्वन्दीव श्लोकमीदृशम् ॥३६॥
"प्रभातप्रायाऽसौ रजनिररुणज्योतिररुणो[३]
रुणद्धीदं रोदो दिशि [दिशि] तमस्ताम्यतितमाम् ।
प्रभाच्छिद्रश्चन्द्रो दलति दलमैत्रीं जलरुहां
रहोऽनुत्साहस्य श्लथय नृप ! निद्रासुखरसम्"[४] ॥३७॥
श्रुत्वेत्युत्थाय विस्मेरोऽदृष्टपारसरोऽवजम् ।
स्नात्वा तत्रात्तपद्मश्च जिनसद्म तदागमम् ॥३८॥
विम्वमभ्यर्च्य जैनेन्द्रमीन्द्रनीलशिलाजुषः ।
गत्वा मलयसुन्दर्या न्यषीदं नातिसन्निधौ ॥३९॥
ततश्चतुरिकेत्यूचे गुणान् श्रुत्वा कुमार ! ते ।
प्रेमाश्चर्यवशादत्राऽऽगन्ता तिलकमञ्जरी ॥४०॥

१ स्वा । २ स्र । ३ णं in TM। ४ Quoted from TM cf. TM (N) p 359। ५ भ्यर्चीजैनें० ।

तन्मुहूर्त्तमिहैवाद्य स्थेयं कल्याणमूर्त्तिना ।
एवं वदन्त्यामेवास्यां तूर्यध्वनिरुदस्थितः ॥४१॥
द्योतयन्ती सितच्छत्रमण्डलेनाथ रोदसीम् ।
अङ्कं दधाना मायूरातपत्रमयमस्य च ॥४२॥
राजमानाऽभितो रत्नविमानैस्तारकोज्ज्वलैः ।
तन्वानोभयतः शुभ्रैचामरैः किरणच्छटाः ॥४३॥
आरुढा हस्तिनीं श्यामां प्रतिमारूपतः क्षितौ ।
चन्द्रमूर्त्तिरिवोत्तीर्णा दिवस्तिलकमञ्जरी ॥४४॥
यानादुत्तीर्य तद्द्वारि निवारितपरिच्छदा ।
प्रविश्य तत्रोपा[वि]क्षद्[१] द्रविडेन्द्रसुताग्रतः ॥४५॥
स्पृशन्ती तां करेणांसदेशे मलयसुन्दरी ।
अप्राक्षीत् किं सखि ! क्षामा किं नामासीदपाटवम् ॥४६॥
इत्युदीर्य मयि क्षिप्तनेत्रा नम्राननां पुनः ।
तामदत्तोत्तरामूचे देहि दृष्टिमितः सखे ! ॥४७॥
श्रीमेघवाहनस्यैष भरतार्द्धमहीभृतः ।
कलावान् प्रथमः सूनु[ः][३] कुमारो हरिवाहनः ॥४८॥
ततो मदेन मुकुलां विस्मयेन विकस्वराम् ।
प्रेरितामनुरागेण व्रीडया विषमीकृताम् ॥४९॥
सा मे वपुषि पीयूषवृष्टिं दृष्टिं[२] न्यवेशयत् ।
जगौ मृगाङ्कलेखाऽथ तत्सखी द्रविडेन्द्रजाम् ॥५०॥
सत्यं कलावानेवायं देव्या दवर्थुमन्यथा ।
कथं चतुरिकाख्यातं नामाऽप्यस्य निराकरोत् ॥५१॥
काञ्चीराजात्मजाऽप्यालि ! प्रभावो हि महात्मनाम् ।
अन्यूनमहिमा नूनमित्युक्त्वा मौनमाश्रयत् ॥५२॥
क्षणं स्थित्वा सवैलक्षं ततस्तिलकमञ्जरी ।
धैर्यमालम्ब्य ताम्बूलं सकर्पूरं स्वयं ददौ ॥५३॥
अथाऽवदत् प्रसन्नं मां दक्षिणक्षितिपाङ्गजा ।
ज्ञातसारा [६]कुमारासौ कलासु सकलास्वपि ॥५४॥

१ त्र । २ क्षित् । ३ सु । ४ सु । ५ लिं । ६ कुमार । + असौ ।

यथेच्छं परिपृच्छैनां येनाहमपि निर्वृतिः ।
स्वरूपमवगच्छामि निशाम्यन्ती वचांसि वाम् ॥५५॥
अथावोचमहं काञ्चीराजपुत्रि ! न राजति ।
उक्तिरज्ञातमच्चित्तवृत्त्या देव्या सहाय मे ॥५६॥
अवश्यं संस्तुतस्योक्तमितरोऽपि करोति न ।
निसर्गतोऽपि निःस्नेहो जनः किं पुनरीश्वरः ? ॥५७॥
तदत्रभवती जातु प्रस्थिता ज्योतिषां पथा ।
दक्षिणाशावतंसेषु विहर्तुं मैलयादिषु ॥५८॥
दृष्टशक्रावतारादि नमस्याऽलङ्करिष्यति ।
यद्ययोध्यां तदा सर्वं सम्प्रक्ष्येऽहं यथामति ॥५९॥
पुनर्दर्शनमेवैकं वक्तुं साधु ममाधुना ।
इत्युक्ते सा स्वमस्मार्षीत् प्रागप्रागल्भ्यवल्गितम् ॥६०॥
त्रपयैवाक्षमाऽऽस्थातुमुत्थाय सहसाऽथ सा ।
मठाग्रभुवमारोहत् खेचरीभिः परिष्कृता ॥६१॥
मयि क्षिप्तेक्षणा तत्र सा कुर्वाणा प्रतिक्षणम् ।
ससीत्कृतं शीतमणिस्तम्भेषु परिरम्भणम् ॥६२॥
समुद्गिरन्ती शृङ्गारकाव्यानि अन्यभाषया ।
ताम्बूलं बन्धुबालानां क्षिपन्ती स्वमुखान्मुखे ॥६३॥
धम्मिलं दोर्लतोल्लासप्रकाशकुचमण्डला ।
कन्दुकक्रीडने श्रान्तमश्रस्तमपि बध्नती ॥६४॥
स्थित्वा चिरमथोपेता पुनर्मलयसुन्दरी ।
नान्यवृद्धावबुद्धा च सा चचाल निजालयम् ॥६५॥
कियदप्यनुगम्यैतां द्रागेत्य द्रविडेन्द्रजाम् ।
ऊचे वेत्रभृदार्ये ! त्वां देवी विज्ञापयत्यदः ॥६६॥
कुमारेण सहागत्य गृहाननुगृहाण मा[म्] ।
साऽवोचन्नोचितमिदं मन्दुरे ! वनवासिनाम् ॥६७॥
आतिथ्याय कुमारस्तु यात्वेवं विससर्ज ताम् ।
सखी मृगाङ्कलेखाख्या समागत्याऽगदत् ततः ॥६८॥

१ न्या । २ त । ३ स । ४ स्कु । ५ ताः । ६ त । ७ सी । ८ द ।

आर्ये ! खलु विचार्येदं बहिर्देवी प्रतीक्षते ।
ब्रूते तावन्नो यामि यावन्नो जामिरागता ॥६९॥
तन्निर्बन्धमिमं मत्वाऽचलन्मलयसुन्दरी ।
स्मित्वा मृगाङ्कलेखा मां करे धृत्वोदतिष्ठिपत् ॥७०॥
अनयच्चान्तिकं देव्याः साऽपि विस्फारितेक्षणा ।
मामभीक्ष्णं तया वीक्ष्य कृष्यमाणं कृतस्मिता ॥७१॥
आरुह्य गजमादिश्य मत्समीपे परिच्छदम् ।
समं मलयसुन्दर्या ययौ निजनिकेतनम् ॥७२॥
अगमं तद्विमानस्थो नगरं रथनूपुरम् ।
मृगाङ्कलेखानर्मोक्तिविस्मितोऽहमपि क्षणात् ॥७३॥
तदीयरम्यताविष्टलोचनाकृष्टमानसः ।
मृगाङ्कलेखया पृष्टः पुरं दृष्टमिदं त्वया ॥७४॥
भद्रे ! तदपि किं दृष्टमुच्यते यन्न वीक्ष्यते ।
आरक्षालक्षितैः प्रत्युद्देशमित्यभ्यधामहम् ॥७५॥
साऽथ द्विपघटाघण्टाटङ्कारमुखराध्वना ।
वाममन्तःपुराध्वानं गत्वा निजमवातरत् ॥७६॥
तत्रोत्तीर्णस्य मे स्वर्णपर्यङ्कमधितस्थुषः ।
पादशौचमसौ चक्रे स्वयं कुङ्कुमवारिणा ॥७७॥
समर्पितश्रेक्ताम्बूला तत्सखीसन्निधिं ययौ ।
सा तु मातुर्गृहं गत्वाऽदर्शयद्[२] द्रविडेन्द्रजाम् ॥७८॥
स्वयमेत्य निजां चित्रशालां द्वित्रसखीयुता ।
मार्गागमश्रमव्याजादादिष्टशिशिरक्रिया ॥७९॥
दिदृक्षुर्मामुपाविक्षद् गवाक्षे दक्षिणेतरे ।
वीक्ष्य चालक्षविक्षेपैर्नेत्रैश्चिरमवातरत् ॥८०॥
तं गवाक्षमवेक्ष्याहं लोलाक्ष्या वियुतं तया ।
तान्तस्तद्विरहेणान्तःपुरोपवनमव्रजम् ॥८१॥
तत्र मामभ्यधादेत्य द्वाःस्था हरिणिकाभिधा ।
कुमार ! विज्ञापयति त्वामिदं भर्तृदारिका ॥८२॥

---

१ स्रक् । २ त् । ३ क्ष्य ।

स्नानादि मङ्क्षु मध्याह्नविधिराधीयतां यतः ।
कालातिपातः क्लिश्नीयादार्यां मलयसुन्दरीम् ॥८३॥
यथाऽऽह देवीत्युक्त्वाऽहमेत्य तत्रैव धामनि ।
स्नात्वा कृतभवोन्माथमादिनाथमपूजयम् ॥८४॥
गृहीतोदारशृङ्गारः स्थित्वा प्रारूढसंख्यया ।
मृगाङ्कलेखया साकमक्षक्रीडापरः क्षणम् ॥८५॥
उपहूतो मुहुर्देव्या प्रेषितैः स्वसखीजनैः ।
प्रस्थितोऽहमथापश्यं तस्याः प्रासादमग्रिमम् ॥८६॥
अर्काश्मनिर्मितं हेमकुम्भोद्भासिशिरोगृहम् ।
कैलाशमिव भूतेशभालनेत्राग्निभासुरम् ॥८७॥
विद्यावशंवदैर्वाजिमृगेन्द्रगरुडादिभिः ।
विद्याधरवधूयानै रुद्धमध्यमगोपुरम् ॥८८॥
दिदृक्षयाऽवतीर्णाभिः स्वर्गस्त्रीभिरिवाभितः ।
सलीलं सञ्चरन्तीभिः खेचरीभिरलङ्कृतम् ॥८९॥ कुलकम् ।
प्रविश्य तत्र सम्भ्रान्तवेत्रिणीदर्शिताध्वना ।
आसदं सज्जसूदादिजनं भोजनमण्डपम् ॥९०॥
तत्राभुक्तचरैर्भक्ष्यविशेषैरभ्यवाहरम् ।
उपस्पृश्य क्षणं स्थित्वा सङ्कथाभिरथाऽभ्यधाम् ॥९१॥
मृगाङ्कलेखे ! स्वसखीं पृच्छ यामो [४]वयं गृहान् ।
प्रविश्याऽथ प्रतीहारी मन्दुरा व्याजहार माम् ॥९२॥
कुमार ! द्वारि कोऽप्यस्ति शुकस्त्वद्दर्शनोत्सुकः ।
ब्रवीति च निवृत्तोऽहं लौहित्यावासिसैन्यतः ॥९३॥
अहं तु प्रहितं स्मृत्वा प्रावेशयमिमं शुकम् ।
चक्रे चञ्चुपुटक्षिप्तलेखो लेखजयध्वनिम् ॥९४॥
महात्मन् ! गुह्यकः सिद्धो गन्धर्वः खेचरोऽथवा ।
कृपालुः कोऽप्यवाप्तोऽसि दैवादेवंविधं वपुः ॥९५॥

१ सं । २ दे । ३ गु । ४ च । ५ cf. लेखो वाचिकहारकः वर्णमुखः स्वस्तिमुखः त्रिकाण्ड० II viii 28; and लेखो देवेऽपि पङ्क्तौ स्त्री । त्रिकाण्ड० III. iii. 52
६ प ।

तत् तवानन्यसाध्यार्थकारिणोऽन्यत् करोमि किम् ?।
आतिथ्यमित्थमुक्त्वाऽहं तमुत्क्षिप्याङ्कमानयम् ॥९६॥
अथैत्य कुन्तला नाम शय्यापाली जजल्प माम्।
देवीति विज्ञापयते ममाख्यातं वयस्यया[१] ॥९७॥
यद् दिदृक्षुः कुमारोऽद्य नगरं गूढविग्रहः।
तन्निशीथमिमं दिव्यपटं प्रावृत्य पश्यतु ॥९८॥
अयं हि मे हिमाहार्यसद्मपद्ममहाह्रदम्।
गतायै पद्मया दत्तः प्रभावोऽप्यस्य शंसितः ॥९९॥
यत् कोऽपि प्रेक्षतेऽनेन छन्नदेहं न देहिनम्।
नास्त्रं स्पृशति न व्याधिर्बाधते नाश्नुते विषम् ॥१००॥
किञ्च स्पर्शादपि प्रौढशापानपहरत्ययम्।
इत्युक्त्वा प्रावृणोत् तेन तनुं मम समन्ततः ॥१०१॥
तं निशीथमथ क्षिप्त्वा मङ्क्षु प्रादुरभूत् पुरः।
पुमानेको ममोत्सङ्गादद्रिशृङ्गादिवांशुमान् ॥१०२॥
तमालोक्य क्रमोल्लासिभयविस्मयसम्मदाः।
गन्धर्वकोऽयमित्येवमुदघोषत योषितः ॥१०३॥
पटाक्षेपस्फुटाङ्गं तं दृष्ट्वा तत्र कृतानतौ।
देवि! गन्धर्वकः पूर्वं यो नष्ट इति घोषितः ॥१०४॥
स निष्क्रान्तः कुमाराङ्कादित्याकर्ण्य परिच्छदात्।
देवी मलयसुन्दर्या समं साश्चर्यमाययौ ॥१०५॥
प्रीता सा वीक्ष्य मां दिव्यवस्त्रालङ्कारधारिणम्।
समन्दाक्षमुपाविक्षत् पीठे परिजनाहृते ॥१०६॥
कृतप्रणामं पस्पर्श मूर्ध्नि गन्धर्वकं मुहुः।
ततो मलयसुन्दर्याः पादयोस्तमपातयत् ॥१०७॥
ततोऽहमवदं देवि! पटस्ते घटयन्नयम्।
मम गन्धर्वकं बन्धुकल्पं सद्यःफलोऽभवत् ॥१०८॥
सविस्मयाऽथ साऽवोचन्नीचैः काञ्चीपतेः[२] सुताम्।
आर्ये! किमु कुमारेण दृष्टो गन्धर्वकः पुरा ॥१०९॥

१ यो। २ ति।

प्रत्यभाषत सा नेदं जाने वृत्तमहं सखि ! ।
कुमारमेव तत् पृच्छ ततोऽहमिदमभ्यधाम् ॥११०॥
केवलं देवि ! नैवायं वीक्षिताऽत्रभवत्यपि[1] ।
इत्युक्त्वा वृत्तमालेख्यपटादिकमवादिषम् ॥१११॥
गन्धर्वकमथाऽपृच्छं तदापृच्छच्च मदान्तिकात् ।
क्व गतं क्व स्थितं कुत्र विलम्बितमियत् त्वया ॥११२॥
विद्युदुद्द्योतवत् सद्यः कथमाविरभावि च ।
इति पृष्टो मया साश्रुलोचनोऽयमवोचत ॥११३॥
सायाह्नेऽहं तदाऽह्नाय कुमारोपवनाद् गतः ।
विचित्रवीर्यदेवस्य त्रिकूटमुकुटं पुरम् ॥११४॥
सन्देशान् खेचरेशं तं विज्ञाप्य प्राप्य च प्रगे ।
श्रीपत्रलेखयाऽऽदिष्टं[2] विमानं हारिचन्दनम् ॥११५॥
पटाञ्चलाबद्धभवन्मित्रलेखस्ततोऽचलम् ।
काञ्चीं प्रयातुं गन्धर्वदत्तादर्शनहेतवे ॥११६॥
मलयोपत्यकोत्तंसतापसाश्रमसन्निधौ ।
आकर्ण्य करुणाक्रन्दमुत्तीर्णोऽहं विहायसः ॥११७॥
ततः कृतकुचायासनिःश्वासैर्व्योमलाधराम्[3] ।
बाष्पाविलकपोलाङ्कमिलदाकुलकुन्तलाम् ॥११८॥
यियासुर्यौवनामेकां वीक्ष्य वृक्षतलेऽबलाम् ।
अवदं रुद्यते मातः ! किमर्थमिति कथ्यताम् ॥११९॥
असौ जगाद मत्पादन्यस्तमौलिः सगद्गदम् ।
कुरु पुत्र ! परित्राणमपत्यप्राणरक्षणात् ॥१२०॥
पुत्री काञ्चीपुरीभर्तुरियं मलयसुन्दरी ।
सर्वस्वभूता गन्धर्वदत्तागर्भसमुद्भव[ा] ॥१२१॥
किञ्चिद् विचिन्त्य प्रहिता विगृहीतेन वैरिभिः ।
अर्द्धरात्रे पुरादत्राश्रमे पित्रा समर्प्य मे ॥१२२॥

१ Note the peculiar use of अत्रभवती for second person, though it can be taken to be addressed through Malayasundari.
२ ष्ट । ३ स्वा । ४ cf त्रिकाण्ड० I. vii. 4.

अत्रैव च स्थिता कञ्चित् कालं कलितवल्कला ।
हेतोः[1] सद्यः कुतोऽप्यद्य सागरान्तिकमागमत् ॥१२३॥
धावन्त्या पृष्ठतो[2] दृष्टा मया निर्भर्त्सिता रुषा ।
जातानुतापया[3] पश्चाच्चाटुवाक्यैः प्रसादिता ॥१२४॥
श्रान्तेत्यसक्तं सिक्ता च भीतया शीतवारिणा ।
परि प्रत्युत्तरेणापि नास्मि सम्भाविताऽनया ॥१२५॥
अतः करोमि पापाऽहं विलापानेवमाकुला ।
पश्यन्त्या एव मे जाताऽधुना [4]विधुरचेतना ॥१२६॥
ततः सबाष्पो बालायास्तस्या दृष्ट्वाऽङ्गचेष्टितम् ।
अवदं मा विषीदार्ये ! विषावेगा हि विक्रिया ॥१२७॥
अद्याप्यसौ सचैतन्या कन्या जीवितुमर्हति ।
तद्विमानेन नेयाऽऽशु स्थाने दिव्यौषधीजुषि ॥१२८॥
अचिन्तयमहो[5]! कार्यविवर्त्तस्य विचित्रता ।
सौधे या चिन्तिता द्रष्टुं सा दृष्टैवंविधा वने ॥१२९॥
अथ यानेऽब्जशय्यायां तां निधाय पिधाय च ।
सर्वतः स्वोत्तरीयेण चित्रमायमवादिषम् ॥१३०॥
दिनमेकमिह स्थेयमार्या[6] साँन्त्वयता त्वया ।
अहं पुनरिहानेष्ये[7] द्रुतमस्तविषामिमाम् ॥१३१॥
गन्धर्वदत्तामाराध्य गत्वाऽयोध्यां पुरीं ततः ।
विद्यालेख्यं लिखिष्यामि कुमारस्य प्रतिश्रुतम् ॥१३२॥
दैवाद् यदि विलम्बो मेऽवलम्ब्यालक्षितं तदा ।
रूपं किञ्चित् त्वया नेयः कुमारो रथनूपुरम् ॥१३३॥
यत् तत्रास्मिन् गतेऽस्माकं कार्यसिद्धिर्महीयसी ।
इत्युक्त्वा प्रस्थितो गन्तुं व्योम्ना दिव्यौषधाटवीम् ॥१३४॥
दक्षिणे च क्षणार्द्धेन भरतार्द्धे विलङ्घिते ।
विमानेगतिभङ्गोऽभूदेकश्रृङ्गनगोपरि ॥१३५॥
अथोत्क्षिपन्तं सक्रोधमिव न्यग्रोधवीरुधम् ।
अद्राक्षमिन्द्रनीलाश्मभासुरं पुरुषं पुरः ॥१३६॥

---

१ हो । २ ष्ठ । ३ ना । ४ बि । ५ वा । ६ माहा । ७ शा । ८ ष्ये । ९ त । १० ल । ११ स्म ।

विभाव्य तत्प्रभावेन यानस्तम्भं तमभ्यधाम् ।
किं महात्मन् ! लतापाणिः सरणिं संरुणत्सि मे ॥१३७॥
यदौषधिबलेनास्मि काञ्चीपतिसुतामिमाम् ।
द्रुतमस्तविषावेगां विधित्सुर्गन्तुमुत्सुकः ॥१३८॥
इत्युक्तोऽपि यदाऽध्वानं स नामुञ्चत् तदाऽवदम् ।
दिव्योऽसि वपुषा क्रूरकर्मणा नारको भवान् ॥१३९॥
कोपारुणेक्षणः सोऽपि प्रोचे रे ! खेचराधम ! ।
वशिष्टधर्मवर्त्मस्थं दुःखितप्राणिवत्सलम् ॥१४०॥
आदिष्टं दुष्टशिक्षार्थं स्वामिन्याऽस्मिन् जिनालये ।
महोदराख्यं यक्षेशमधिक्षिपसि मामपि ॥१४१॥
प्राच्यं वा सुकृतं कस्य मुखेन ख्यापयामि ते ।
या पञ्चशैलचैत्यस्य सालाग्रात् पतिताऽम्बुधौ ॥१४२॥
अन्तरालान्मया नीता सौधे सेयमचेतना ।
तिलकान्तहृतामेतां हृता मे प्रेयसीति यः ॥१४३॥
मत्वा नोऽम्बुनिधौ क्षिप्तवपुरुत्क्षिप्तनौस्थितः ।
कुमारः प्रापितः स्कन्धावारं सोऽपि न सन्निधौ ॥१४४॥
तद्दुराचार ! रे ! क्रूरकर्माऽहं न पुनर्भवान् ! ।
वर्त्म विस्तीर्णमभ्यर्णं यो विहाय विहायसः ॥१४५॥
गीर्वाणसिद्धविद्यामृद्वन्द्यस्याद्यजिनेशितुः ।
दिव्यायतनमुल्लङ्घ्य यानस्थो यातुमिच्छसि ॥१४६॥
हता हताश ! ते साऽद्य विद्या गगनगामिनी ।
कर्त्ताऽसि पक्षविक्षेपाद् यदि त्वं चैत्यलङ्घनम् ॥१४७॥
स्वदेहमस्मत्स्वामिन्या न प्रसादं विनाऽऽप्स्यसि ।
इत्युक्त्वा मुक्तहुङ्कारोऽक्षिपद् यानं सरोवरे ॥१४८॥
मग्नोन्मग्ने च तत्रैक्षे स्वं शुकत्वमुपागतम् ।
संशोच्याऽथ निजावस्थां तदाऽवस्थां जिनालये ॥१४९॥
इष्टस्यावाचयल्लेखं यथा काञ्चीपतेः सुता ।
देव्या चैत्यं यथा नीता स्थापिता च यथा मठे ॥१५०॥

१ श । २ ना । ३ क्षिच । ४ शकु ।

यथा लेखो मया नीतः प्रतिलेखो यथा हृतः ।
पश्यामि सर्वं तत्साक्षादक्षतप्राक्तनस्मृतिः ॥१५१॥
एतदेव न वेद्मीयं कथं काञ्चीन्द्रसम्भवा ।
निर्विषाऽभूत् कथं च स्वं देहमद्याहमासदम् ॥१५२॥
इत्याख्याते च तेनाहं सार्द्धं सौधपुरन्ध्रिभिः ।
क्षणं सविस्मयोल्लेखं स्थित्वा लेखमवाचयम् ॥१५३॥
स्वस्ति श्रीष्टतमोद्देशे समाराध्यतमोत्तमान् ।
हरिवाहनपादाब्जान् लौहित्यावासिसैन्यतः ॥१५४॥
नत्वा सभूपः कमलगुप्तो विज्ञपयत्यदः ।
यल्लेखात् सुधियाऽऽदिष्टं यदन्यदपि साम्प्रतम् ॥१५५॥
तद् विश्वमपि कर्त्ताऽस्मि प्रतिकर्त्तुं तु न क्षमः ।
युवराजस्य समरकेतोः स्नेहमहं परम् ॥१५६॥
श्रुत्वा तन्नाम काञ्चीन्द्रसुताऽम्लायत चिन्तया ।
आस्ते समरकेतुः किमन्योऽपि स्नेहवानिति ॥१५७॥
मां च म्लानमुखव्यङ्ग्यैस्स्वदेशगमनेङ्गितम् ।
सा विलोक्यालपच्चिन्ताचान्ता तिलकमञ्जरीम् ॥१५८॥
लेखं कुमारः प्रेक्ष्यामुं यियासुः शिबिरं प्रति ।
त्वां वक्तुमक्षमश्चक्षुर्मुहुः क्षिपति मन्मुखे ॥१५९॥
विसृज्यतो सदेष त्वं लोकमाकुलमीक्षितुम् ।
सत्वरं त्वद्गुणाकृष्टमानसः पुनरेष्यति ॥१६०॥
नतवदनमुवाच काञ्चिकन्यामथ रथनूपुरचक्रवालबाला ।
समयसमुचितं त्वमेव वेत्सीत्यकृत ममानुचरं च चित्रमायम् ॥१६१॥
सखीचित्तज्ञाऽथ द्रविडपतिपुत्री तमवदद्
द्रुतं भद्र ! प्राप्यः पुनरिह कुमारः कृतकृतिः ।
स्ततश्चापृच्छ्यैते गगनचरचक्रोपनमिते
विमानेऽध्यारूढोऽचलमभि निजं मण्डलमहम् ॥१६२॥

[इति श्रीतिलकमञ्जरीसारे] **गन्धर्वकशापापगमो नाम सप्तमो विश्रामः** ॥ [ **इति सप्तमं प्रयाणकम्** । ]

---

१ °स्वति० । २ च्च । ३ ग ।

## अथाष्टमं प्रयाणकम् ।

वर्ण्यमानविशेषांस्तांस्तानग्रेसरखेचरैः ।
पश्यन् वसुन्धरोद्देशानाशु स्वं देशमासदम् ॥१॥
चित्रामायमथाऽवोचं स एष शिखरी सखे ! ।
यतः स्वहस्तिना हृत्वा नीतास्त्वद्विषयं वयम् ॥२॥

क्षणमात्रं स्थीयतामत्रेत्युक्त्वा यानादवातरम् ।
एकमैक्षेऽनुगानेकगजं[1] तत्र मतङ्गजम् ॥३॥

ततस्तं प्रत्यभिज्ञाय चित्रमायमवादिषम् ।
स एवायमहो ! वैरियमदण्डः करी मम ॥४॥

[ [2]सरस्यदृष्टपारे यो मृत इत्यवधारितः ।
उवाच सो विहस्याऽथ कुमारेदं सुदुर्घटम् ॥५॥
न भूमिगोचरो दृष्टः करेणुः खेचरः क्वचित् ।
अन्यः कोऽपि भवेत् सोऽयं त्वदीयैव तु वारणः] ॥६॥

तत्प्रोषिता यथा यामस्तथैव शि[बि]रं पुनः ।
इत्यादेशात् तदाऽऽनीतमध्यारूढो निजं गजम् ॥७॥
प्रणम्यमानो राजन्यैः प्रविश्य शिबिरं ततः ।
मद्दर्शनोत्पन्नजनोत्स्वासं[3] स्वावासमव्रजम् ॥८॥
तदङ्गणोपविष्टं मां द्रष्टुमीयुषि राजके ।
सखेदोऽवैदमद्यापि युवराजः क्रिमेति न ॥९॥
राजसूनुर्जगादैको यदा लेखः कुमार ! ते ।
दृष्टस्तदैव निभृतं निशीथे स विनिर्ययौ ॥१०॥
उदीच्यां तं प्रयातं च प्राग्ज्योतिषनृपानुजः ।
अधारयन्मित्रैर्धरो[4] निर्बधान्न तु स स्थितः ॥११॥
निशम्य तद्वचस्ततः सप्तिभिर्जवनैरहम् ।
सम्प्रस्थितोऽनुगन्तुं त्वां कर्कमर्क इवोत्तराम् ॥१२॥

१ Followed my many elephants. २ Here also the poet has missed an important point regaarding the elephant episode. It is proposed to be supplied here thus. ३ च्छ्वासं । ४ वे । ५ ०न्निव० ।

चित्रमायो दिनान् कांश्चिदनुगम्य जगाद माम् ।
त्वामानेतुं कुमारोऽहं व्याहृतो मुहुरार्यया ॥१३॥
तन्मया किमु कर्तव्यमथ सव्यथमभ्यधाम् ।
भद्र ! गच्छास्ति निर्बन्धो बन्धोरन्वेषणे मम ॥१४॥
वद मद्वचसा चैतामारम्भः पुनरेष मे ।
कार्यं तदेव खेदस्तन्न कार्यः कश्चिदार्यया ॥१५॥
यथा भवति देवी च सप्रसादा सदा मयि ।
तथा किञ्चित् प्रवर्त्तेथा इत्युक्त्वा तं व्यसर्जय[म्] ॥१६॥
अहं चान्वहमन्विष्यंस्त्वामटव्यामथाविशम् ।
तस्यामपश्यमश्वेनायातं गन्धर्वकं जवात् ॥१७॥
उत्तीर्य मां ननामायमथाऽनामयभाषणम् ।
विधायाहमधिश्रित्य शिलामेकां तमालपम् ॥१८॥
को गन्धर्वक ! वृत्तान्तस्तदाऽभूत् प्रस्थिते मयि ।
ज्ञाता वयं कुतोऽत्रस्थाः किमायातस्त्वमुत्सुकः ॥१९॥
सोऽवदत् प्रस्थिते देवे स्थित्वा काञ्चीन्द्रजा क्षणम् ।
आपृच्छतैकशृङ्गाद्रौ गन्तुं तिलकमञ्जरीम् ॥२०॥
साऽपि त्वद्गमनोद्विग्ना तां विना स्थातुमक्षमा ।
अत्रापि सखि ! सुप्रापं स्नानं क्रीडाद्रिनिर्झरे ॥२१॥
सुलभं कन्दमूलादि मन्दिरोद्यान एव मे ।
यद्वा ते दर्शयामीति तामुक्त्वोद्यानमानयत् ॥२२॥
यत्र यत्रासितं तत्र भवता तत् तदान्वहम् ।
तद्दर्शनापदेशेन पश्यन्ती व्यचरच्चिरम् ॥२३॥
अथानुरोधस्थितया सार्द्धं काञ्चीन्द्रकन्यया ।
विनोदैः साऽनयद् वीणावादनाद्यैर्दिनानिमान् ॥२४॥
अद्य तु प्रातरेवासौ स्वसौधशिखरस्थिता ।
पश्यन्ती त्वत्पथं चित्रमायमायान्तमैक्षत ॥२५॥
ततो मलयसुन्दर्यां विलक्षं चक्षुरक्षिपत् ।
साऽप्यपृच्छदुपेतं तं कुमारः किमु नागतः ? ॥२६॥

१ रो । २ न्चे । ३ क्त्वौ । ४ म्य । ५ व । ६ मा ।

स प्रणम्याऽवदद् देवि ! सिंहलेन्द्रसुतः सुहृत् ।
कुमारस्यास्ति समरकेतुर्नाम प्रियामभूः ॥२७॥
स चात्तद्विपरूपेण मया गन्धर्वकाङ्क्षया ।
हृतं कुमारमन्वेष्टुं कान्तारेऽविशदुत्तरे ॥२८॥
इतो गतः कुमारोऽपि वाहैर्वेगात् तमन्वगात् ।
तमपश्यन् बहु भ्रान्त्वा तदेव प्राविशद् वनम् ॥२९॥
एवमस्मिन् वदत्येव हा ! कुमार ! तवाप्यहो ! ।
सुकृती स कृतोऽरण्यवासक्लेशाय वेधसा ॥३०॥
इदं वदन्त्येवायाता मोहं मलयसुन्दरी ।
स्वयमाश्वास्य तामेवमुवाच खेचरेन्द्रजा ॥३१॥
स वयस्यः कुमारस्य संस्तुतस्तेऽपि किं सखि ! ।
किञ्च तस्यैव हेतुर्न वनवासे तवाप्यसौ ॥३२॥
साऽभाषिष्ट[1] मुहुः पृष्टा सखि ! तिष्ठ किमप्यहम् ।
श्रुत्वा कुमारकान्तारक्लेशमीशे[2] न जल्पितुम् ॥३३॥
सा बभाषे सखि ! क्लेशमीदृशं सहते स किम् ? ।
स्थित्वा त्वदाश्रमे मित्रं नान्वेषयति खेचरैः ॥३४॥
सा व्याहरदिहागन्तुमक्षमः क्षितिगोचरः ।
अथो मामादिशद् देवी त्वां समानेतुमाश्रमे ॥३५॥
निजं विमानं विद्याभृत्सहस्रं[3] च मया सह ।
प्राहिणोदहमायां च चित्रमायाङ्किताध्वना ॥३६॥
इत्युक्त्वा त्वरितस्तेन[4] तद्यानमहमास्थितः ।
आगां मलयसुन्दर्या आश्रमं सपरिच्छदः ॥३७॥
तत्र लौहित्यशिबिरात्[5] क्लृप्तेष्टार्थश्च खेचरैः ।
त्वदीयादर्शनेनैव दूयमानोऽनयं[6] दिनान् ॥३८॥
अन्यदा सैन्यतः प्राप्तः सुखासीनं प्रणम्य माम् ।
शङ्खपाणिरिदं रत्नकोशाध्यक्षो व्यजिज्ञपत् ॥३९॥
कुमार ! स्वर्गिणो हारः श्रीदत्तोर्मिकया सह ।
प्रयाणकाले[7] ते विघ्नशान्त्यै देवेन मेऽर्पितः ॥४०॥

१ स्वा । २ ह । ३ त्ता । ४ त्वे । ५ हः । ६ य । ७ ल

तदेव धारितः कालमेतावन्तं ममान्तिके।
अत्रायातेऽधुना स्वामिन्यहमेनमिहानयम् ॥४१॥

तदयं गृह्यतामित्थमुक्त्वा रत्नकरण्डकात्।
हारं विधुनिदाम्भोधेः[4] सहोर्मिकमुदक्षिपत् ॥४२॥

तमहं तु पुरा[5] दृष्टमिव स्पृष्टमिवोरसा।
चितं[6] विमृश्य विस्मेरोऽभ्यधां गन्धर्वकं पुरः ॥४३॥

देव्यास्तिलकमञ्जर्याः कण्ठपीठं विनाऽऽस्पदम्।
नान्यदस्य तदा मुञ्च कण्ठेऽमुं चटुलत्विषम् ॥४४॥

मुद्रया चानया पूतपाणिः काञ्चीन्द्रजा यथा।
देवार्चां कुरुते कुर्यास्तथेत्युक्त्वाऽत्यसर्जयम् ॥४५॥

तस्यागमिष्यतोऽन्येद्युर्मार्गं पश्यन्तमेत्य माम्।
चेटी चतुरिकाऽवोचदिमं तिलकमञ्जरी ॥४६॥

तव प्रहितवत्येवमुक्त्वाऽग्रे लेखमक्षिपत्।
वामाक्षिण स्पन्दमानेऽहं सखेदस्तमवाचयम् ॥४७॥ युग्मम्।

स्वस्त्येकशृङ्गो राजेन्द्रपुत्रं श्रीहरिवाहनम्।
अपारदुःखाकूपारमग्ना तिलकमञ्जरी ॥४८॥

नत्वा विज्ञपयत्येष कण्ठमाश्लिष्य मेऽधुना।
रुषेव त्वत्परीरम्भारभं हारो न्यवारयत् ॥४९॥

तथाऽप्यहमिहस्था वा तीर्थान्तरगताऽथवा।
यावज्जीवामि नो तावदुत्तार्य[12] मानसादिति[13] ॥५०॥

कथञ्चन विसृज्यैनां[14] तत्कालोत्थाधिबाधितः।
निशीथे निरयां[15] सैन्याद् भृगुपातकृतादरः ॥५१॥

गत्वा वनाध्वना दूरमध्यारूढो गिरेस्तटम्।
कामदं तीर्थं[16] न्विष्यन्नेकमीक्षे नृपात्मजम् ॥५२॥

धार्यमाणं दुकूलान्ते श्लिष्यमाणं च [पादयोः।]
[मुहुः प्रसाद्यमानं च] राजपुत्र्या सबाष्पया ॥५३॥

वीक्ष्य तं द्विगुणोद्वेगोऽवदं सौम्य! क्व गम्यते।
पादानतामिमां[17] हित्वा बालामेकाकिनीं वने ॥५४॥

---

१ त। २ तं। ३ तवां। ४ of the ocean exatremly churned। ५ ड or द्र। ६ परिचितम्। ७ त्र। ८ स्र। ९ तस्य नाग०। १० यां। ११ म्य। १२ र्यं। १३ म। १४ जद्र। १५ या। १६ थ। १७ मि।

स व्याहृतार्य ! शैलेऽत्र शिखरे चण्डगह्वरे ।
प्रपातसानुः संहारनामास्ते सार्वकामिकः ॥५५॥
तत्र प्रपित्सुर्विद्यामृदनङ्गरतिरित्यहम् ।
निर्वेदादचलं दुष्टदायादापहृतास्पदः ॥५६॥
एषा नवस्नुषा प्राणान् प्रथमं मोक्तुमुत्सुका ।
तद् द्रष्टुमक्षमं मङ्क्षु यातमेवं रुणद्धि माम् ॥५७॥
अथाहं विस्मृतात्माधिरालपं किमु बालक ! ।
क्षपयस्यात्मनोऽस्याश्च वपुर्वयसि नूतने ॥५८॥
राज्यं गृहाण मे सञ्जोऽन्यस्मिन्नपि तवेप्सिते ।
सोऽवदन्नन्दतादार्य ! राज्यं त्वय्येव तावकम् ॥५९॥
अस्ति मे मन्त्रसङ्घातः क्रमायातः फलेग्रहिः ।
देवताधिष्ठितः साध्यः पुंसा धैर्यैकसद्मना ॥६०॥
तदाराधनलब्धाधिविक्रमः क्रमिकं पदम् ।
मह्यं देहीति तद्वाक्यमहमप्यर्म्युपागमम्[म्] ॥६१॥
तेनाऽथ विधिवद् दत्तविश्वमन्त्रेण दर्शितम् ।
शिक्षिताराधनोऽविक्षं गम्भीरं गिरिगह्वरम् ॥६२॥
तेनोपनीतपुष्पादि निस्तन्द्रः संयतेन्द्रियः ।
त्रिसन्ध्यं निर्झरे स्नात्वाऽभ्यर्च्य विद्यादिदेवताः ॥६३॥
बद्धपद्मासनस्तत्र प्रारेभे मन्त्रसाधनम् ।
ध्यानेऽथ [10]यातुधाना मे विघ्नमाधातुमाययुः ॥६४॥ युग्मम् ।
केचित् कोशलनाथस्त्वामानेतुं प्राहिणोदिति ।
केचिच्चतुरिकावेषधारिणो लेखमक्षिपन् ॥६५॥
केचिद्रूचुर्वयस्यस्ते दिष्ट्या दृष्टोऽस्ति वर्द्धसे ।
केचिच्च चित्कृते ताम्यत्यलं तिलकमञ्जरी ॥६६॥
वीक्ष्य मां निश्चलं तेऽनुतेनुर्जातु दवानलान् ।
निर्घाताञ्जातुचित् सिंहनादानपि कदाचन ॥६७॥

---

१ व । २ त । ३ म । ४ म । ५ र्य । ६ चा । ७ च । ८ भु । ९ र । १० आ । ११ नो । १२ मै । १३ वर्य । १४ °वने° ।

इत्यश्रान्तोपसर्गस्य कुर्वतो मन्त्रसाधनम् ।
गतेषु षट्सु मासेषु स्वल्पशेषे जपे मम ॥६८॥
क्षिपन्ती दीपिकेवाङ्गमहसा सहसा तमः ।
एका सुरवधूरेत्य पुरो मधुरमभ्यधात् ॥६९॥
दिक्षु सत्त्वनिधे ! चक्षुर्निधेहि तव सत्त्वतः ।
प्रज्ञप्ती-रोहिणीमुख्या देव्योऽष्टापि समाययुः ॥७०॥
तत् ते प्रियं किं यच्छाम एवमुक्तोऽहमभ्यधाम् ।
किं प्रियं वियुतस्यैवं मित्रेण प्रियया च मे ॥७१॥
तदनन्तरगतेरस्य[4] प्रियं कुर्वन्तु[5] देवताः ।
साऽब्रवीदमुनाऽप्यन्यत्स्वार्थार्थ्यर्थितो भवान् ॥७२॥
श्रूयतां विजयार्द्धेऽस्मिन्नुत्तरश्रेणिभूषणम् ।
पुरमस्ति सुरावासनिभं गगनवल्लभम् ॥७३॥
तत्र विक्रमबाहुः श्रीनिवासैकनिकेतनम् ।
आसीच्चक्री विरोधिस्त्रीकेलिरोधिभुजार्गलः ॥७४॥
नलिनी गलितश्रीका कान्दिशीकालिमालिका ।
किञ्च क्रन्दत्ययं चक्रस्तीरान्तरगतप्रियः ॥७५॥
इत्यादिवाक्यैर्दिवसावसाने चारणोदितैः ।
भावितानित्यभावोऽभूद् विषयेषु स निःस्पृहैः ॥७६॥
जिनोक्ते चामुना मुक्तिपुरीवर्त्मन्युरीकृते ।
शाक्यबुद्धिरथोद्विग्नस्तन्मन्त्री राज्यचिन्तया ॥७७॥
अपश्यन् गोत्रजं राज्यधरमित्येनमादिशत् ।
गच्छाऽनङ्गरते ! तूर्णमेकशृङ्गाख्यशृङ्गिणि ॥७८॥
वयस्यान्वेषणायातं कुमारं हरिवाहनम् ।
तत्रोपायैर्निजैर्विद्यासाधनैकधियं कुरु ॥७९॥
अयं हि प्राक्तनेनैव संस्कारेणोपकारकृत् ।
प्रार्थितं तेऽन्यथा नैव कर्त्ता प्रकृतिवत्सलः ॥८०॥

१ त्व । २ त्व । ३ दि । ४ One syllable is more than expacted in this quarter. The meaning is "of one who has no other choice."
५ त्वु । ६ र्थम० । ७ तच । ८ चू । ९ प । १० हाः । ११ क्त ।

अष्टापदादिहायातैरुपास्य मुनिपुङ्गवम् ।
प्रागृजन्मास्य ममाख्यातं वीरसेनादिखेचरैः ॥८१॥
तन्निःशङ्कं प्रवर्त्तस्व तं देवस्य पदं यथा ।
सद्यः सिद्धमहाविद्यैमिहानीय निवेशये ॥८२॥
इत्युपदेशादिहागत्य दम्पतेर्मरणच्छलात् ।
नियोजितो दयालुस्त्वं विद्यानां साध[नि] नु नः ॥८३॥
तदनेनाग्रहेणालमेता मानय देवताः ।
चक्री भवोत्तरश्रेणेः[९] शाक्यबुद्धेः कुरु प्रियम् ॥८४॥
इत्युक्त्वान्तर्वभूवाऽसौ ततोऽभूद् दुन्दुभिध्वनिः ।
तेनाहूताः [र]सामेत्य प्रणेमु[ः] खेचरेश्वराः ॥८५॥
[अथ प्रयाणविमुखं विमाने विनिवेश्य माम् ।
विजयार्द्धगिरिश्रृङ्गं चण्डगह्वरनामकम् ॥८६॥
नीत्वा च वारिभिस्तत्र मणिकुम्भसमाहृतैः ।
अभिषिच्योत्तरश्रेणिराज्ये नेमुः कृतार्थिनः] ॥८७॥
दैवज्ञेनाऽथ विज्ञप्तं प्रत्यग्रे[10] पुरंदशसा[11] ।
प्रवेशाय पुरे पुण्यं लग्नं गगनवल्लभे ॥८८॥
अहं तिलकमञ्जर्या वियोगविधुरोऽस्म्यधाम् ।
चक्रसेनन्नृपौवासवार्त्ता वेत्तीह कश्चन ॥८९॥
अथ द्वाःस्थोऽवदद् देव ! सम्प्रत्येवे[13] समागतः ।
कोऽप्यस्ति दक्षिणश्रेणेर्दिदृक्षुः द्वारि दारकः ॥९०॥
तेनादेशादथाऽऽनीतमैक्षे गन्धर्वकं मुदा ।
स प्रणम्योपविष्टश्च पृष्टः साश्रुरभाषत ॥९१॥
तदा देव ! त्वदादेशान्मुद्रयाऽर्पितया करे ।
स्मृतजन्मैन्तिरेवाप खेदं मलयसुन्दरी ॥९२॥

१ म्व । २ One syllable is more than expected in this quarter. ३ स्य । ४ लाम । ५ ष । ६ प । ७ णैः । ८ मा । ९ Here also there is a gap because the episode of anointing Harivahana as their king by the Vidyadhara is omitted. The lacuna is therefore filled up. १० मत्युग्रः । ११ स्य । १२ म्रश । १३ द । १४ न्म ।

चन्द्रातपेन हारेण देवी तु हृदयस्पृशा।
म्लानवक्त्राम्बुजाऽवादीत् प्रत्यभिज्ञाय देव! माम् ॥९३॥

गन्धर्वक! कुतो हारं कुमारः प्राप्तवानमुम्।
ततोऽहं व्याहरं देवि! मेघवाहनभूभृता ॥९४॥

नक्तं गतवता शक्रावतारजिनमन्दिरे।
ज्वलनप्रभनाम्नोऽयं सुरादासादितः पुरा ॥९५॥

मध्येवैमुद्गिरत्येव देवी मोहमुपागमत्।
चिराय प्राप चैतन्यं चन्दनव्यजनादिभिः ॥९६॥

पृच्छ्यमानाऽपि सा नाख्यत् सखीनां मोहकारणम्।
विज्ञना च गमयाञ्चक्रे चक्रवाकीव तां निशाम् ॥९७॥

प्रातर्गुरुजनं ज्ञातवृत्तमायान्तमादृतम्।
अवमन्यैव साऽचालीत् तीर्थालीवन्दनच्छलात् ॥९८॥

अथ गीर्वाणपूज्यस्य निर्वाणेनादिमप्रभोः।
आरूढमहिमानं सा प्रापदष्टापदाचलम् ॥९९॥

भावितीर्थकृतां स्वस्वमानवर्णविराजिनीः।
नमन्ती प्रतिमास्तत्र भरतेश्वरकारिताः ॥१००॥

स्थाने स्थाने नमस्यन्ती चारणश्रमणानपि।
तत्कालकलितज्ञानमेकमालोकयन्मुनिम् ॥१०१॥

संस्तूयमानं सानन्दैः सुरासुरनभश्चरैः।
प्रणम्य तमुपाविक्षत् पुरतः सपरिच्छदा ॥१०२॥ कुलकम्।

भवान्तरकथास्तेन कथ्यमाना महात्मना।
सदुःखं शृण्वती वीक्ष्य वीरसेननृपोऽभ्यधात् ॥१०३॥

भगवन्! दक्षिणश्रेणिचक्रवर्तितनूद्भवा।
यौवनस्थाऽप्यसौ जाता पुरुषद्वेषिणी किमु? ॥१०४॥

---

१ चन्द्रं। २ ता। ३ काः। ४ ष्ये ५ नो। ६ न। ७ च। ८ भा। ९ सु। १० तू। ११ स्व। १२ ह।

किं वा [1]कल्यापि कल्ये[2]ऽसौ+ सहसा मोहमागमत् ।
किं च त्यक्तविभूषाऽपि हारं कण्ठे वहत्यमुम् ॥१०५॥

तदेतत् कथ्यतां नाथ ! महन्मम कुतूहलम् ।
इत्यानतेन तेनासौ पृष्टोऽवादीत् त्रिकालवित् ॥१०६॥

जीवः संसारचक्रेऽस्मिन् स्वशुभाशुभकर्म्मभिः ।
भ्राम्यमाणो मृदः पिण्ड इवैति बहुरूपताम् ॥१०७॥

मानुषत्वं सुरोऽप्येति तिर्यक्त्वं नारकोऽपि च ।
कल्योऽप्यार्त्तत्वमीशत्वं दासोऽपीशोऽपि दासताम् ॥१०८॥

सौधर्मवासी येनासीत् सुनासीरसमः सुरः ।
विमानमाश्रितो लीलावतंसं ज्वलनप्रभः ॥१०९॥

आसन्नच्यवनश्चासौ परोपक[रणाद्] विना ।
बोधिं प्रेत्यापि दुःप्रापं मत्वा स्वर्गाद् विनिर्गतः ॥११०॥

प्रवृत्तिं वेदितुं तस्य प्रिया खेदवशंवदा ।
प्रियङ्गुसुन्दरी* नाम जम्बूद्वीपमथाऽगमत् ॥१११॥

सहैवा[गत]या पत्युर्द्वीपान्तरमुपेयुषः ।
ज्वलनप्रभमित्रस्य वियोगेन सुमालिनः ॥११२॥

सा प्रियंवदया सार्द्धं विजयं पुष्करावतीम् ।
गत्वा नत्वा जयन्ताख्यमप्राक्षीत् तीर्थनायकम् ॥११३॥

स्वामिन्नस्मि सखीयं मे वियुक्ते भर्तुरन्तिकम् (?)।
प्रस्थिते कथय [11]क्वैतत्सङ्गमो नौ भविष्यति ॥११४॥

धर्म्मावाप्तिः कथं वा [12]स्यान्मर्त्यलोकावतीर्णयेः ।
ततो भगवताऽभाणि कल्याणि ! [13]श्रूयतामिदम् ॥११५॥

अत्रैव भरतक्षेत्रे धरित्रीकुण्डलोपमौ ।
[14]विद्येते एकशृङ्गश्च रत्नकूटश्च [15]पर्वतौ ॥११६॥

१ ल्या । २ ल्पे । + कल्या=healthy; कल्ये=yesterday. cf. निरामयः कल्यः । अमर० II vi. 57. ३ ता । ४ त्ते । ५ गी । ६ दो । ७ स्व । *प्रियङ्गुमञ्जरी in the Ms. It is by slip of pen either of the author or of the scribe. ८ साहे । ९ प । १० मा । ११ स्कै । १२ र्त्या । १३ सु । १४ द्या । १५ वी ।

भवत्योर्भविताऽभीष्टसङ्गमः क्रमशस्तयोः ।
घर्म्माप्तिरेककालं तु दिव्यालङ्कारदर्शनात् ॥११७॥
इति [1]श्रुत्वैकशृङ्गाद्रौ कल्पद्रुपरिवेषिणा ।
दिव्येन जिनहर्म्येण पावनाभ्यन्तरावनिम् ॥११८॥
मनोरमाख्यमारामं निर्माप्याश्रयमात्मनः ।
प्रियङ्गुसुन्दरी [2]तस्थौ प्रियागमसमुत्सुका ॥११९॥
प्रियंवदाऽप्यथाऽऽधाप्य रत्नकूटनगोपरि ।
जिनालयं रत्नमयं स्वप्रियस्पृहया स्थिता ॥१२०॥
आयान्तीमन्यदा नन्दीश्वरादिषु विहारिणीम् ।
प्रियङ्गुसुन्दरी देवीमपश्यत् कमलासनाम् ॥१२१॥
अग्रतो धृतयानां तां गच्छदग्रपरिच्छदाम् ।
यियासुमेव सा वीक्ष्य रुषाऽभापत किं सखि ! ॥१२२॥
नेहोत्तरसि किं स्नेहोऽधुना मयि तवापि न ।
श्रीः स्माह वेश्मनोऽहानि निर्गताया बहूनि मे (?) ॥१२३॥
वचो मे तदिहस्थायाः श्रुणु प्रातः प्रियंवदा ।
विषण्णा रत्नकूटाद्रौ मया दृष्टा सखी तव ॥१२४॥
सा प्रसीद गृहाणेदमातिथ्यं समयोचितम् ।
इत्युदीर्य ममाङ्गुल्यां स्वाङ्गुलीयकमक्षिपत्* ॥१२५॥
तया तवेति सन्दिष्टमभाग्यैर्मेऽयथाकृतम् ।
सर्वज्ञस्यापि वाक्यं यन्नायाद् भ्राता भवत्पतेः ॥१२६॥
क्षीणमायुश्च मे जन्मान्तरे [3]तन्मे[4] स्मरिष्यसि ।
मत्कारिते सनाथत्वं चैत्ये कारयितासि च ॥१२७॥
श्रुत्वेति साऽपि सोद्वेगाऽथोचे सखि ! सनाथताम् ।
अस्मिन् कतिपयाहस्तु कर्त्ता मत्कीर्त्तनेऽपि[7]+ कः ॥१२८॥
कं चार्थये गतः कालः स यत्राज्ञाकराः सुराः ।
ममासन्नथ तद्दुःखदुःखिता श्रीरभाषत ॥१२९॥

---

१ आ । २ तोस्थो । * This important point is not mentioned even in the original prose-romance, viz, the TM. ३ ०एत० । ४ मा । ५ व । ६ । सास्वाथा । ७ न । + =temple.

मा विधास्त्वं मुधा खेदं मयेदं सखि ! सुश्रुतम् ।
सा निजं व्याजहाराथ प्रतीहारं महोदरम् ॥१३०॥

त्वया मुक्तप्रमादेन प्रासादेऽमुत्र तत्र च ।
उपद्रवः क्षुद्रजनाद् रक्षणीयः प्रतिक्षणम् ॥१३१॥

इत्युक्त्वा सत्वरं प्राप निजमन्दिरमिन्दिरा ।
प्रियङ्गुसुन्दरी प्रेयःसङ्गमं नासदत् पुनः ॥१३२॥

एषा तथाऽप्यसंञ्जातविद्वेषा सर्वविद्विरि ।
पुण्यमावर्ज्य पूर्णायुस्त्यक्तवैक्रियविग्रहा ॥१३३॥

विजयार्द्धेऽवतीर्याप विद्याधरधरापतेः ।
पुत्रीत्वं तामवेहि त्वमिमां तिलकमञ्जरीम् ॥१३४॥

असौ दृढपतिप्रेमसंस्कारा पुरुषान्तरे ।
अस्थादस्थापितप्रीतिश्चिरं प्राचि दिने पुनः ॥१३५॥

दृष्ट्वा हारमिमं जातस्मृतिर्मोहं जगाम च ।
कण्ठे प्रेयानघाद् गच्छन्नित्यमुं च न मुञ्चति ॥१३६॥

अथ प्रभो ! स ज्वलनप्रभः कथमभूदिति ।
सहर्षपर्षदा पृष्टः स महर्षिरभाषत ॥१३७॥

अत्रैवं भरते शक्रावतारे हारमादरात् ।
साकेतपतये मेघवाहनाय वितीर्य सः ॥१३८॥

अगान्नन्दीश्वरे तत्र निजमित्रं सुमालिनम् ।
गिरा संवेगदायिन्या जिनधर्मम[बोध]यत् ॥१३९॥

पुनरेत्य मर्त्यलोकभरतैरावतादिषु ।
अर्हतामानर्च भक्त्या सप्तत्याभ्यधिकं शतम् ॥१४०॥

प्राप्तिं चरमदेहस्य खेचरेन्द्रश्रिया सह ।
जन्मान्तरेऽर्जयित्वाऽसौ पूर्णायुरवतीर्य च ॥१४१॥

मयैव दत्तविद्यस्य साकेतपुरभूभृतः ।
तस्यैवं तनयत्वेन बभूव हरिवाहनः ॥१४२॥

---

१ द । २ मं । ३ द्वे । ४ त । ५ मा । ६ वं । ७ सो । ८ तत । ९ मं ।

अथ दृष्ट्वा मुनिः प्रष्टुकामां मलयसुन्दरीम् ।
[भू]यो बभाषे कल्याणि ! शृणु वृत्तं सुमालिनः ॥१४३॥
सम्यग्दर्शनसंलीनः स च्युत्वा* सिंहलेष्वभूत् ।
सुतः समरकेतुः श्रीचन्द्रकेतुनरेशितुः ॥१४४॥
इति सदसि तदीयप्राच्यजन्मस्वरूपं
निखिलमपि निगद्य प्रोत्थिते तत्र साधौ ।
विदितभवविवर्त्तप्रोषितामन्दशोकः
स सुरखचरलोकः स्वं स्वमोकं प्रयातः ॥१४५*॥

**इति श्री[तिल ञ्जरीसारे] प्राग्भवपरिज्ञानो नामाष्टमो विश्रामः।**
**[ इत्यष्टमं प्रयाणकम् । ]**

---

१ भ । *Having descended. Note the peculiar use of the root च्यु in the Jainistic sense. २ लब्ध । ३ द ।

* The author's verses are 141. The restoration of the gaps by the editor adds more verses and brings the total to 145

## अथ नवमं प्रयाणकम् ।

ततश्चागत्य सानन्दविषादा पट्ट[1]मण्डपम् ।
देवी मुनीनामातिथ्यमन्नदानादिना व्यधात् ॥१॥
भुक्ते परिजने भुक्त्वा तां कुथास्तरणस्थिताम् ।
ऊचे काञ्चीन्द्रजाऽऽगत्य वनात् कृतफलाशना ॥२॥
अधुनाऽऽलि ! किमाधेयं[2] स्थेयं कान्यप्यै[3]हानि किम् ।
गिराविह विहर्त्त[4]व्यं किं वा तीर्थान्तरेष्वपि ॥३॥
सदुःखं साऽप्यभाषिष्ट सखि ! सम्प्रति कम्पते ।
अकस्माद् दक्षिणं चक्षुर्न जाने किं भविष्यति ॥४॥
अथागत्याऽगदद् द्वाःस्था देवि ! प्रास्थापि यत् त्वया ।
प्रस्थानसमये नेतुं कुमारं शिबिरं निजे ॥५॥
दिदृक्षुर्द्वारि विच्छायश्चित्रमायः स तिष्ठति ।
श्रुत्वेति किञ्चिन्नावादीद् देवीसाध्वसरुद्धवाक् ॥६॥
ततो मलयसुन्दर्या मोचितः सोऽप्यवोचत्[5] ।
तदा देवि ! त्वदादेशादेकशृङ्गं नगं गतः ॥७॥
अन्वेषयं कुमारं तं न तु क्वापि व्यलोकयम् ।
तद्वृत्तं ज्ञातुमादिश्य खेचरानहमागमम् ॥८॥
श्रुत्वेति सान्तःशोकाग्निधूमेनेव गतद्युतिः ।
ऊचे मलय[6]सुन्दर्यो[7]ऽनर्थोऽस्यायं भवत्कृतः ॥९॥
तदुत्तिष्ठ प्रतिष्ठ[8]स्व तमन्वेषयितुं स्वयम् ।
स हि त्वद्गमनज्ञाने न जाने[9] किं व्यवस्यति ॥१०॥
इत्युक्त्वा यानमारुह्य सा भवन्तं समन्ततः ।
समन्विष्यैकशृङ्गाद्रौ सायमायतनं गतौ[10] ॥११॥
तत्रोद्विग्नभवत्सैन्यलोकेन विहितानतिः ।
दूरस्थैव जिनं स्तुत्वाऽध्यारोहन्म[11]ठमूर्द्धनि ॥१२॥
तत्रानिष्टानि देवस्य ध्यायन्ती तानि तानि सा ।
कृच्छ्रामन्मलयसुन्दर्याऽऽश्वा[12]स्यमानाऽनयन्निशाम् ॥१३॥

---

१ द । २ य । ३ श्र । ४ तः । ५ को । ६ स्व । ७ र्याः । ८ ष्ठ । ९ ज
१० गतः । ११ व । १२ स्वा ।

जिनसद्माजिरे प्रातर्निविष्टा वेत्ति कश्चन ।
वृत्तं कुमारस्यात्रेति स्वमपृच्छत् परिच्छदम् ॥१४॥

अथ संदीपनो नाम तामेभाषत खेचरः ।
देवि ! प्राचिंदिने चित्रमायादेशाद् विचिन्वता ॥१५॥

श्रुतं मया निषादेभ्यः स कुमारो यथा किल ।
अधिवैताढ्यमारूढः प्रपातं सार्वकामिकम् ॥१६॥

अतस्तु न क्वचित् किञ्चिज्ज्ञातमित्यत्र शंसति ।
अङ्के मलयसुन्दर्याः साऽपर्तन्मोहविह्वला ॥१७॥

चिरेणानुचरीवृन्दाक्रन्देनैव प्रबोधिता ।
आदिशद् विश्वजगतोजिनार्चाभ्यर्चने सखीः ॥१८॥

मूलचैत्ये स्वयं चैत्य स्तवयित्वा जगद्गुरुम् ।
अर्चयित्वा च साऽवोचद् दुःखितप्राणिवत्सलै ! ॥१९॥

अपुण्यभागिनस्त्यक्तसुरक्तजनसन्निधेः ।
जनस्यामुष्य शरणं विभो ! भव भवान्तरे ॥२०॥

एवं सबाष्पा विज्ञप्यादृष्टपारसरोवरे ।
निरुध्यमानाऽप्यालीभिरथाऽचालीत् प्रपित्सया ॥२१॥

अथ श्रुतसुतामृत्युवार्त्तेनार्तेन चक्रिणा ।
षितोऽभ्येत्य प्रकर्षाख्यो वेत्रपाणिर्व्यजिज्ञपत्* ॥२२॥

त्वत्पिता देवि ! मद्वाचाऽऽदिशत्युचितमुज्झितुम् ।
जीवितं प्राग्भवारुढप्रेम्णः पत्युर्वियोगतः ॥२३॥

किन्तु श्रुतापदाऽप्यद्य निमित्तैर्निश्चितं शुभैः ।
शुभं मया कुमारस्य षड्भिर्मासैस्तु दर्शनम् ॥२४॥

इयन्तं स्थीयतां कालं वत्सेयोत्सुकयापि तत् ।
इत्युक्ता सोऽपि तत्राऽस्थादलङ्घ्यं हि गुरोर्वचः ॥२५॥

---

१ न। २ वि। ३ तज्ज्ञा०। ४ पे। ५ प। ६ लं। ७ का। ८ सुष्ठ्य।
९ नी। १० त्तया ११ प्प। *One syllable more than necessary.
१२ घ्वावा। १३ त्या। १४ स्वा। १५ तेनि। १६ त्त। १७ त्। १८ क। १९ सो।

ततः फलाशना भूमि[शय्या] त्वद्दर्शनाशया ।
अह्नोनान्+ गमयामास षण्मासान् वनवासिनी ॥२६॥
अथाद्य स्व(श्व)स्तनमहं दिनमीक्षितुमक्षमः ।
इममिष्टतनुत्यागः प्रपातभृगुमार्गमम् ॥२७॥
आरूढस्तत्र च प्राणिघातरक्षणदीक्षितैः ।
व्याघरैरिहेदानीं देवस्यानीय दर्शितः ॥२८॥
इति गन्धर्वके देव्याः पूर्ववृत्तं प्रजल्पति ।
स्मरामि स्म सुखं सर्वं गीर्वाणभवसम्भवम् ॥२९॥
क्षणं स्थित्वा स्मृतेः सद्यः सुखद्विपि [समुत्सुकः] ।
वृत्ते तिलकमञ्जर्याः कार्यान्तरपराङ्मुखः ॥३०॥
गन्धर्वकाय नेपथ्यं दत्त्वाऽथ जिनमन्दिरम् ।
एकशृङ्गशिरोरत्नमगच्छं सपरिच्छदः ॥३१॥
श्रीनाभेयमिहाभ्यर्च्य पश्यन्मण्डपसम्पदम् ।
प्रेक्ष्य प्रशस्तिं स्पं[ष्ट]र्लिपिवर्णोत्कीर्णामवाचयम् ॥३२॥
आभाण्य दर्शनोल्लासिमुदं मलयसुन्दरीम् ।
गन्धर्वकं स्ववृत्तान्तं वक्तुमुक्त्वा तदन्तिके ॥३३॥
द्वाःस्थोपदिश्यमानाऽधात् [त]मारामं प्रविश्य च ।
कदलीमन्दिरान्तःस्थां मृणालप्रायभूषणाम् ॥३४॥
विषण्णाभिर्वयस्याभिः प्रयुक्तशिशिरक्रियाम् ।
दूरादेवावलोके स्म देवी तिलकमञ्जरीम् (?) ॥३५॥
दिष्ट्यासि वर्द्धसे देवि ! प्राप्तः श्रीहरिवाहनः ।
श्रुत्वेति लोकाद् विहिताभ्युत्थानां तामवादिषम् ॥३६॥
नतस्तु सम्भ्रमेणालमङ्गेनैव कृशेन ते ।
प्रेम×न्यञ्चितमित्युक्त्वा हेमपीठे निविष्टवान् ॥३७॥
अत्रान्तरे भवानेव प्राप्तो गन्धर्वकान्वितः ।
गजापहारात् प्रारभ्य सुहृदो दर्शनावधि ॥३८॥
इति स्ववृत्तमावेद्य विरते हरिवाहने ।
पार्श्ववर्ती स सर्वोऽपि जनः सम्मदमासदत् ॥३९॥

+ =Less by one day. १. द्मा । २ म । ३ भा । ४ नर्मा । ५ क्षि । ६ न्मु । ७ स्व । ८ हे । ९ कि । १० तेः । ११ प्र । १२ श्व । ×अभिधानचिन्तामणि । IV. 118

अङ्गराजस्तु मुषित इवाविष्ट इव क्षणात् ।
मूर्च्छां क्षणाच्च चैतन्यमावहन्मौनमाश्रयत् ॥४०॥
कुमारोऽपि तमालोक्य नूनं पूर्वभवस्मृतेः ।
सशोकोऽयमिति ज्ञात्वा धीरः स्वस्थ इवावदत् ॥४१॥
युवराज ! पुराजन्मभुक्तसौख्यानि संस्मरन् ।
पृथग्जन इवेत्थं किं विमुह्यसि मुहु[र्मुहु]ः ॥४२॥
किञ्च तैः साध्यते स्वल्पैः [स्वप्न]सङ्कल्पितैः फलम् ।
तद् विधेहि धियं धीर ! कार्ये कालोचितेऽधुना ॥४३॥
दर्शयोत्कण्ठितायाः स्वं काञ्चीभूपभुवश्चिरात् ।
सा हि ते जन्मद्वितयप्रिया मोहं वितन्वती ॥४४॥
वनप्रवेशात् प्रभृति त्वदुदन्ते तिरोहिते ।
मृत्योरप्यधिकं दुःखं वहमानाऽवतिष्ठते ॥४५॥
अवदत् सोऽपि यद्येवं तत् कुमार ! समादिश ।
अस्मदागमनोदन्तहरं कञ्चिन्नभश्चरम् ॥४६॥
अहं स्वयंप्रभारागात् कृतागाः* प्रेक्षितुं क्षमः ।
तस्या नैवास्यमित्युक्त्वा स्थिते द्वाःस्था व्यजिज्ञपत् ॥४७॥
किञ्चिद् विज्ञप्तुमायातो द्वारेऽस्ति खचरेशितुः ।
विचित्रवीर्यदेवस्य पुमान् कल्याणकाभिधः ॥४८॥
विजनं क्रियतां देव ! इत्याकर्ण्योत्थिते जने ।
त्वराप्रवेशितो नत्वा सोऽपि लेखं पुरोऽक्षिपत् ॥४९॥
अवाचयत् कुमारस्तं स्वस्तिश्रीमत्त्रिकूटतः ।
राजा विचित्रवीर्यः श्रीनिर्जितस्वर्गसम्पदि ॥५०॥
विजयार्द्धोत्तरश्रेणौ लोकोत्तरगुणाश्रयम् ।
महौजसं महाराजनन्दनं हरिवाहनम् ॥५१॥
संयोज्याम्बुधिपर्यन्तपृथिवीविजयाशिषा ।
प्रीणात्यमन्दमालिङ्ग्य स्वदेहारोग्यवार्त्तया ॥५२॥

१ भ । २ स्व । ३ ना । ४ य । ५ ष्ट ।

* This indicates that स्वयंप्रभा and प्रियंवदा were two different beloveds of सुमाली and this clears the point referred to in the कृतविप्रियः प्रियंवदाभावतः प्र[मृ]ति. in TM. p. No. 421 (21 ff). ६ र्णो । ७ स्य ।

सङ्कल्प्य सिंहलाधीशसुतं त्वद्भ्रातरं वरम् ।
मया मलयसुन्दर्या विवाहः प्रस्तुतोऽधुना ॥५३॥
वल्कलैरेव संवीता नीता चायुष्मती गृहम् ।
लग्नं प्रतिष्ठितं मित्रज्ञातिवर्गो निमन्त्रितः ॥५४॥
मत्सङ्कल्पस्ततः स्वल्पजनजल्पविबाधितः ।
नेयः कल्पायुषा नायमुपहासकथामिति ॥५५॥

कुमारोऽथ तमूचेऽत्र युवराजः कथं श्रुतः ।
अज्ञातकुलशीलश्च तातेन कथमादृतः ! ॥५६॥
स चाख्यत् प्रस्थिते देवे गतायां ह्यस्तने दिने ।
हर्म्ये तिलकमञ्जर्य्यां प्रारब्धेऽथ महोत्सवे ॥५७॥
सखी तिलकमञ्जर्य्याः प्रमोदविकसन्मुखी ।
मृगाङ्कलेखा नाम श्रीपत्रलेखां व्यजिज्ञपत् ॥५८॥
वर्द्धसे देवि ! काञ्चीन्द्रसुतावरसमागमात् ।
द्वितीयेनोत्सवेनेति विज्ञप्याथ यथाश्रुतम् ॥५९॥
पुरस्तिलकमञ्जर्य्या देवेनैव निवेदितम् ।
वरं मलयसुन्दर्य्याः सिंहलेन्द्रसुते जगौ ॥६०॥
श्रुत्वेति साऽवदच्चित्रलेखे ! मलयसुन्दरीम् ।
इहानयाहं पश्यामि येनोद्वाहं द्वयोरपि ॥६१॥
साऽप्यूचेऽनुपगन्धर्वदत्तं कृत्यमिदं तव ।
परं विचित्रवीर्येण कार्यमित्यादिशन्मुनिः ॥६२॥
तदादिशसि चेद् गत्वा तमेवात्र प्रवर्त्तये ।
देव्यादिष्टाऽथ सा सर्वमन्वतिष्ठद् यथोचितम् ६३॥
मयेति सर्वं विज्ञप्तं देवादिष्टं तवाधुना ।
जामाता प्रेष्यतामाशु लग्नमासन्नमेव यत् ॥६४॥
आस्ते काञ्चीपतेर्लोको वैरालोकनलोलुभः ।
श्वश्रूगन्धर्वदत्ताऽपि सुतापाणिग्रहोत्सुका ॥६५॥
प्रशान्तवैराश्रमत आनीताऽद्यैव दुर्बला ।
तरङ्गलेखाऽप्युद्गाढस्पृहा गन्धर्वकागमे ॥६६॥

१ ल्प । २ सं । ३ गा । ४ वे : ५ च । ६ वरस्यालोकलोलुभः । ७ स्वस्र

तेनेत्युक्ते समाहूय सुहृदं हरिवाहनः ।
लेखं संदर्श्य वृत्तान्तमाख्यत् कल्याणकोदितम् ॥६७॥
विहस्य व्याजहारेदमद्यापि युवराज ! किम् ।
विलम्बसे समुत्तिष्ठ कुरुष्व गुरुशासनम् ॥६८॥
यतः काञ्चीन्द्रजा दृष्टे त्वयि त्यक्ष्यति वल्कले ।
इत्युक्त्वा तं सुवेलाद्रौ प्राहिणोत् सपरिच्छदम् ॥६९॥
सविस्मयः स्वयं चाग्रे सायं स्वावासमव्रजत् ।
विभातायां विभावर्य्यां सभामण्डपमागमत् ॥७०॥
तत्रासीनस्य तस्यैत्य चक्रसेननिदेशतः ।
नृपाभिषेकमाङ्गल्यं प्रधानपुरुषाः व्यधुः ॥७१॥
अथारोग्योपलम्भाय प्रत्यहं प्रहितैर्जनैः ।
दर्शितप्रीत्यैसौ चक्रसेनं चक्रिणमीक्षितुम् ॥७२॥
मेखलासङ्गिनीं चारुरचनाभङ्गिमायताम् ।
विजयार्द्धश्रियो वेणिं दक्षिणश्रेणिमागमत् ॥७३॥
आकर्णितागमद्गीतः प्रत्युद्गम्य कृतोत्सवः ।
चक्रभृच्चक्रसेनस्तमावासेऽनयदात्मनः ॥७४॥
तत्राहारं कृतानेकोपचारस्तमकारयत् ।
यियासुश्च ययाचेऽसौ किञ्चित् कालमवस्थितिम् ॥७५॥
बद्धस्तिलकमञ्जर्य्याः प्रेमपाशेन सोऽप्यथ ।
सस्मितास्यस्तदेवास्य वचनं प्रत्यपद्यत ॥७६॥
अन्यदा निरवद्येऽह्नि समाहूत महीभुजा ।
आदिष्टपुरशोभेन भोजितज्ञातिपङ्क्तिना ॥७७॥
राज्ञा श्रीचक्रसेनेन दत्तां तिलकमञ्जरीम् ।
पाणिग्रहोचिताकल्पां विधिवत् पर्यणायि सः ॥७८॥
स्थित्वा श्वश्रूजनप्रीतिकृते कान्यप्यहानि चै ।
याचकानुभयश्रेण्याः कृत्वा त्यागादयाचकान् ॥७९॥
सौभाग्यमञ्जरीं कृत्वा पुरस्तिलकमञ्जरीम् ।
जयवारणमारूढो विधृतातपवारणः ॥८०॥

१ वि । २ ष्ट । ३ प्र । ४ वे । ५ ह्व । ६ चः ।

विद्याधरपरिवारश्चारणस्तुतविक्रमः ।
क्रमादाप नमत्पौरं पुरं गगनवल्लभम् ॥८१॥

अत्यद्भुतवधूरूपविस्मेराभिः पुरन्ध्रिभिः ।
प्राविक्षत् प्रेक्षमाणो[2]ऽसौ सौधं प्रगुणमङ्गलम् ॥८२॥
समं तिलकमञ्जर्या नवं निधुवनोत्सवम् ।
सुखेनानुभवन्नेष ग्रीष्मकालमजीगमत् ॥८३॥

ततश्च दिवसेऽन्यस्मिन् प्रधानपुरुषानसौ ।
प्रेषयामास समरकेतुमानेतुमादृतः ॥८४॥
युवराजोऽपि स वरागमनप्रीतचेतसा ।
नीत्वा विचित्रवीर्येण खेचरेन्द्रेण मन्दिरे ॥८५॥

विधिकारितकाञ्चीन्द्रसुतापाणिग्रहोत्सवः ।
स्थित्वा दशदिनान्यापत् पुरं गगनवल्लभम् ॥८६॥
तस्य प्रह्वीकृतः प्रेम्णा दत्तवान् हरिवाहनः ।
प्रभुत्वमुत्तरश्रेणेरधिकारपदे समम् ॥८७॥
अजस्रसञ्चरद्विद्याधराख्यातपराक्रमम् ।
अन्यदा तं समाहूय परिच्छेदपरिष्कृतम् ॥८८॥
प्रशस्ते वासरे भूमिवासवो मेघवाहनः ।
निवेशयामास यथाविधि हेमासने निजे ॥८९॥
तदनु स्वयं च पृथिवीभृदात्मनः प्रभृति स्वभावपरिभावनादृतः ।
दधदङ्गभूरिदगुरुक्षमाभरं परलोकसाधनविधौ धियं[7] दधौ ॥९०॥

राज्यं श्रीहरिवाहनोऽपि विजिताशेषद्विषन्मण्डलं
सत्त्वानामभयप्रदानप्रवहद्ध्वानस्वनद्दिङ्मुखम् ।
[10]क्लृप्त्वा शैशवसेविसेवैकजनप्राज्यप्रसादं जग-
त्येकच्छत्रमकर्कशीकृत[गुण]स्फीतं सदाऽपालयत् ॥९१॥

इति [ श्री ]तिलकमञ्जरीसारे राज्यद्वयलाभो नाम नवमो विश्रामः ॥
[ इति नवमं प्रयाणकम् ]

---

१ त्यु । २ णां । ३ °रैन° । ४ स्क । ५ सा । ६ त । ७ य । ८ त्वा । ९ प ।
१० कृत्तां । ११ न ।

[ ग्रन्थकर्तुः स्ववृत्तनिवेदनम् ]

अणहिल्लपुरख्यातः पल्लीपालकुलोद्भवः ।
जयत्यशेषशास्त्रज्ञः श्रीमान् सुकविरामनः ॥१॥
सुश्लिष्टशब्दसन्दर्भमद्भुतार्थं रसोर्मि यत् ।
येन श्रीनेमिचरितं महाकाव्यं विनिर्ममे ॥२॥
चत्वारस्तनुजास्तस्य ज्येष्ठस्तेषु विशेषवित् ।
अनन्तपालश्चक्रे यः स्पष्टां गणितपाटिकाम् ॥३॥
धनपालस्ततो नव्यकाव्यशिक्षापरायणः ।
रत्नपालः स्फुरत्प्रज्ञो गुणपालश्च विश्रुतः ॥४॥
धनपालोऽल्पतुष्टश्चापि पितुरश्रान्तशिक्षया ।
सारं तिलकमञ्जर्याः कथायाः किञ्चिदग्रथत् ॥५॥
इन्दु-दर्शन-सूर्याङ्क(१२६१)वत्सरे मासि कार्तिके ।
शुक्लाष्टम्यां गुरावेष कथासारः[:] समर्पितः ॥६॥
ग्रन्थः किञ्चिदभ्यधिकः शतानि द्वादशान्यसौ ।
वाच्यमानः सदा सद्भिर्यावदर्कं च नन्दतात् ॥७॥

॥ मङ्गलमस्तु । श्रीरस्तु ॥

१ ला। २ तृ। + Satisfied with small achievements

## Appendix–A

### Index of Metres in the T S.

(1) अनुष्टुभ्-All other verses excepting the following ones in the following metres.

(2) पृथ्वी—VI. 140

(3) मञ्जुभाषिणी—IX. 90

(4) मन्दाक्रान्ता—I. 160

(5) मालती—VII, 161

(6) मालिनी--III. 139; VII. 141

(7) शार्दूलविक्रीडितम्—I. 122; V. 168. IX. 91

(8) शिखरिणी—VII. 162

(9) स्रग्धरा—IV. 129

(10) हरिणी—V. 167

# Appendix–B

## Index of peculiar words and usages.